॥ श्री ॥

सद्गुरु श्रीत्यागब्रह्मणे नमः ।

---

# श्रीमत्त्यागराजविजयम् ॥

मैसूरु, तिरुवाङ्कूर्‌उभयसंस्थानास्थानविदुष
'गायकशिखामणि'–विरुद्भूषितेन
हरिकेशनल्लूर्ग्रामलब्धोदयेन
श्रीमन्मुत्तय्यभागवतेन
विरचितम्.

प्रथम संस्करणम्.

---

१९४०.

## ॥ समर्पणम् ॥

---

सोऽयं 'गायकशीर्षशोभिमाणिना' मुत्तय्यनामश्रिया
विज्ञात्रा हरिकेशदेशजनुषा मैसूरुमहीपालकैः ।
वश्रीशैरपि भूरिचारुविभवैर्नित्यादृतेनोदितो
ग्रन्थः सन्ततभक्तिभारमुदिते श्रीत्यागराजेऽर्प्यते ॥

अनन्तशयनम्,
३—१२—१९४० 

गायकशिखामणिः ।



'गायकशिखामणि'–श्रीमन्मुत्तय्यभागवता.

# FOREWORD

BY

Doctor Sachivottama Sir C. P. Ramaswami Iyer, K. C. S. I., K. C. I. E.,

DEWAN OF TRAVANCORE

It has been both a pleasure and a privilege for me to contribute a foreword to the narrative poem in easy and mellifluous Sanskrit by *Gāyakaśikhāmaṇi* Muthia Bhāgavatar, dealing with the life and achievements of *Srī Tyāgarāja* who was not only a great composer; but an authentic *Bhakta* and Saint.

As observed by Pandit Venkatarama Sharma in his introductory remarks, there are many reasons why this book is particularly timely and appropriate. Muthia Bhāgavatar himself is one of the foremost exponents now alive of the theoretical as well as the practical aspects of the musical heritage of South India. He is not only renowned as a *gāyaka,* but is versed in many languages and has composed poems, songs, and *kīrtanas* in *Hindustani*, *Kannada*, *Tamil*, *Telugu*

and *Sanskrit* He is a true follower of *Tyāgarāja* and thanks to the large-hearted and far-seeing patronage of Their Highnesses the Mahārājā and Mahārāni Sethu Parvati Bayi of Travancore, he is now engaged along with some colleagues in the welcome as well as arduous task of collecting, editing and publishing the musical compositions of *Mahārājā Swāti Tirunāl*, a royal musician and patron contemporary with *Tyāgarāja*. *Swāti Tirunāl* and *Tyāgarāja* were well acquainted with each other's works and *Tyāgarāja* learnt to admire the versatility, abiding devotion to his *Ishtadevatā* and manysided musical gifts of the talented ruler Muthia Bhāgavatar is also engaged in spreading the knowledge of *Mahārājā Swāti Tirunāl's* musical achievements through the medium of the *Musical Academy* founded about three years ago by His Highness the present Mahārājā

The story narrated on pages 49 to 51 of the poem relating to the contacts between *Swāti Tirunāl* and *Srī Tyāgarāja* is not only historically authentic but displays a mutual generosity and appreciation not always common among scholars and artists. It recounts how *Mahārājā Swāti Tirunāl*, having heard of the musical talent and skill as composer of *Tyāgarāja* and, at the same

time, having learnt how absolutely free *Tyāgarāja* was from the desire for money, sent to him specimens of his composition in various languages and *rāgas* through an emissary the celebrated musician *Shathālagāyi Govinda Mārār*, how *Tyāgarāja* heard these musical pieces recited and sung by *Mārār* and sent a reply of congratulations and greetings and how that letter is still preserved in the Travancore archives

At a time when the din and dust of controversy arise out of disputes regarding the proper medium of music in South India, it is refreshing to bear in mind that more than half a century ago, it was recognised by both these illustrious scholars and musicians that if the intrinsic technique of music was imminent and if those feelings and emotions which are the motive power of all true music are also present, it does not matter in what language a poet or a musician sang what medium he employed and what modes were chosen The author of this poem is himself a good example of the value and importance of catholicity Born in the Tinnevelly district but closely connected with that great centre of intellectual and musical creativeness (valley of the *Kāveri*) and realising the oneness of all art, Muthia Bhāgavatar has included in

this poem both a biography and a criticism of *Śrī Tyāgarāja's* contribution to the theory and practice of music Beginning with a history of the simple and saintly life and the qualities of the father and the mother to whom *Tyāgarāja* owed so much, Muthia Bhāgavatar sets out how the couple who lived in the reign of *Shaji* of *Tanjore* were oblivious to the claims of wealth or worldly advancement and how *Tyāgarāja's* parents were initiated into the worship of *Rāma* who became the family's *kuladevatā*. Readers will be specially struck with the description of *Tyāgarāja's* apprenticeship under the celebrated *Vaiṇika Sonṭi Venkataramaṇa* and how, under him he learnt the habits of rigid analysis and the technical linking of language, of melody, of *rāga* and *tāla*, as expounded by his preceptor both in the *Sanskṛit* and *Telugu* languages, the latter being the mother-tongue of *Śrī Tyāgarāja* The marriage of *Śrī Tyāgarāja* with *Srīmati Viśālākshi*, the humble life of a Hindu householder led by the couple and their daily practice of devout worship interspersed with song are described with loving minuteness. There occur in the poem accounts relating to the revelation and even the direct appearance of the divinity on certain specific occasions, and to the visit paid by *Nārada* and his fruitful blessings.

On page 31, is a very skilful account of the literary and musical output of *Srī Tyāgarāja* which is not only a musical tour-de-force but a concerted hymnology. The description of the master's work is well worth quoting—

आन्ध्रैयव मातृवाचामुं तुष्टावेष्टप्रदं कविः ।
असारतरसंसारदुराचारविदारिणीः ॥
अमन्दगुणसान्द्रश्रीरामचन्द्राभिवन्दिनीः ।
संस्कृतप्रचुरा नूत्नपथबद्धसुमेळकाः ॥
देशीकर्णाटसङ्गीतविचित्रसरणिस्पृशः ।
त्यागराजनुतेत्यादिपदैरन्ते च मुद्रिताः ॥
अनरस्तोत्रसंबन्धा अविष्णुस्तुतिवर्जिताः ।
बालैरपि सुगानांशाः पण्डितैरपि दुर्गमाः ॥
आपादचूडचार्वङ्गीर्वेदान्तार्थविजृम्भिताः ।
सर्वलक्षणसम्पन्नाः स्तुती रचितवांस्ततः ॥

The story of the relations between *Tyāgarāja* and the *Rāja* of *Tanjore*, *Saraboji* and *Tyāgarāja's* indifference to money and position for their own sake, of the *Rājā's* sudden and mysterious malady and the result of his repentance and his ultimate appreciation of the real worth

and quality of *Tyāgarāja* are also described in simple and melodious verses The poem concludes with a recital of the tours of pilgrimage undertaken by *Tyāgarāja* to *Tirupati* and *Gogrāma* with a description of his steadfastness under calamity and in the face of robbers and bandits, with his visit to *Madhyārjuna* and *Negapatam* and his compositions at these various places. After the death of his wife, an event signalised by the composition of *Naukācarita* and *Prahlādavijaya*, *Tyāgarāja* entered the order of *Sanyāsis*, and in peace and full consciousness surrounded by his admiring and sorrowful disciples he passed away from the world leaving an imperishable heritage of music behind him.

The whole story is full of the devout understanding of a true disciple. Apart from the remarkable happenings referred to above, the life of *Tyāgarāja* was that of one who united plain living with very high thinking and great achievement He was the progenitor of the present day musical methods and technique and the significance and glory of South Indian Musical art derive from him and from few others like *Syāmā Sāstrin* and *Dīkshitar* and *Swāti Tirunāl*. He established and immortalised South

Indian Music, enriched *Telugu* and *Sanskrit* and made them apt vehicles of the most exquisite melody and the most variegated musical appeal, and above everything else, he has established a tradition of unfaltering devotion which has made his songs a guide-book for *Bhaktas*

Muthia Bhāgavatar is to be congratulated both on the matter and the manner of his poem and on the method he has chosen to bring home to the people of South India in the most perfect language that humanity has evolved, the life story of one of the real makers of India. A nation is made, its genius moulded and its spirit kept alive mainly by its dreamers, its thinkers, its poets and its musicians and this volume is a fitting tribute by a musician and a composer to a great and illustrious predecessor.

*C. P. Ramaswami Aiyar.*

PANDIT V. VENKATARAMA SHARMA,
*VIDYABHUSHANA,*
LECTURER IN SANSKRIT
UNIVERSITY OF TRAVANCORE

॥ श्री ॥

ललितोदाररचनामधुरं श्रीमत्त्यागराजविजयाख्यं हीदं काव्यम्, श्रीरामब्रह्मसाक्षात्कारदूरिताखिलदुरितजालस्य अधरितसुधारसैः स्वोपज्ञभक्तिभरप्रतिभातैः सख्यातीतैर्गीतैर्गायकलोकमनुगृह्य कथामात्रावशेषिणः पुण्ययशोऽभिवृध्या सर्वत. प्रथां गतस्य सङ्गीतसाहित्यपारदृश्वनः श्रीमत्त्यागराजस्वामिनो जन्मनः प्रभृति मोक्षप्राप्तिपर्यन्तं सर्वाङ्गीणं चरित विशिष्ट विपुलं विततं चोपश्लोकयतीति समाख्ययैव स्पष्टमवगन्तु शक्यते । काव्ये चात्र त्यागराजस्योत्कर्षो जीवितयात्रा वा वर्ण्यत इत्यतो युज्यत एव त्यागराजविजयाख्या; उत्कर्षवाचकत्वाद्विजयशब्दस्य महापुरुषाणां जीवितयात्रायां प्रयोगोपलम्भाच्च । सङ्गीतविद्यासर्वस्वभूतस्य श्रीमत्त्यागराजस्वामिनश्चोच्चावचान्यपदानानि महानुभावतोचितान्यादरणीयतथाद्यापि पौरजानपदैः

सर्वत्र कथागोष्ठीषु कीर्त्यमानानि दृश्यन्ते । भिन्नवृत्तान्तैः सप्तभिः सर्गैर्नातिसंक्षिप्तविस्तरैर्निर्वृत्तमिदं लोकरञ्जकं काव्यं हृदयदेशसमुदित-परचिद्रसार्द्रभगवद्कृपार्द्रहृदयस्य वीतरागस्य भक्तोत्तमस्य स्वामिन-श्चरितं न्यक्षेणोपवर्णयत्, बहुविधक्लेशजालजटिलं संसारमनित्यं शब्द-स्पर्शादिविषयोपभोगमापातमात्रमधुरं प्राणान् तृणाग्रजलबिन्दुसमान् वसुधाधिपत्यं वाताभ्रविभ्रमतुल्यं च सम्यग्विनिवेदयत्, नैकविधै-र्गुणपाठैः सह भूयसे श्रेयसे सर्वदा सर्वत्र ध्येयं परं ब्रह्मावगमयति ।

एतादृशस्यास्य सन्दर्भस्य रचयितारः सहजप्रतिभोपस्कृताः सङ्गीतसाहित्यलक्षणविधायिषु वाग्गेयकारेष्वग्रिमाः विख्यातकीर्तयः सुगृहीतनामधेयाः विपश्चितामपश्चिमाः हरिकेशनल्लूर्पुराभिजनाः श्रीयुत-**मुत्तय्याभागवत**महाशयाः सर्वेषामपि सम्यग्विदितचरा एव । एते च महान्तः अधुनातनेषु गानकलाकोविदेषु अग्रण्यः साहित्यम-र्मवेदिषु शिखामणीयमानाश्च **गायकशिखामणयः** सर्वातिशायि-ख्यातिमन्तश्चकासति । अद्यैते पुराणप्रथितायामस्यामनन्तशयननगर्यां नूत्नतया प्रस्थापितं स्वातिमहाराजस्मारकं सङ्गीतविद्यामन्दिरमधि-तिष्ठन्तः, गर्भसारस्वतेन बहुकलाभिज्ञेन यशश्शरीरमात्रशेषेण **सौवा-तेन श्रीरामवर्मकुलशेखरवञ्चिमहाराजेन** प्रणीताः श्लाघनीयाः सङ्गी-तसाहित्ययोर्बह्वीः कृतीः स्वरसन्दर्भादिगुम्फनपुरस्सरं सर्वत्र प्रचार

नयन्तश्च, महोन्नतमहामहिमशालिनः श्रीचित्रकस्यास्माकं महाराज-बालरामवर्मणः तन्मातुर्महोन्नतमहामहिमशालिन्या महाराज्ञ्याः श्रीसेतुपार्वतीभाइनाम्न्याः महाप्रभावस्य श्रीवञ्चिमण्डलमण्डनाय-मानस्य महामात्यधुरन्धरस्य पण्डितप्रेयसः सचिवोत्तमस्य श्रीयुत-सी. पि. रामस्वाम्यार्यस्य च प्रत्येकाभिमानबहुमानकारुण्यभाजनं विराजन्ते ।

एतत्काव्यरचनाविषये च तेषां सहकृत्वा प्रत्युत्पन्नमतिः व्युत्पत्तिसंस्कृतशेमुषीकः समधिगतशास्त्रमर्यादः मीमांसाशिरोमणि-परीक्षाविजयी श्रीयुत-उड्डपि-रङ्गनाथाचार्यः सुतरां श्लाघापात्रं भवति; यश्च तेषामुपदेश्यो विधेयो भूत्वा निरन्तरं निस्तन्द्रं च प्रयत्य प्रसन्नसु-कुमारप्रायैः पदैः अस्खलितप्रसरैर्वाक्यैः अयत्नोपनतैरलङ्कारैश्चाभिष्य-न्दिभिः प्रतिपाद्यं प्रमेयजातं वितत्य प्रपञ्चयन् स्वप्रतिभोद्भूतै-र्भङ्गिभणितिवैचित्र्यैरामूलाग्रमिदं कविशिल्पं एतद्रूपेण फलिनमनैषीत् ।

आभ्यूहिके चागामिके प्रस्थानयोर्द्वयोः सङ्गीतविद्यामुपजीव्यैव समग्रामपि स्वकीयां जीविकां यापयतां, पुराणच्छायमनुकुर्वतोऽपि काव्यगुणपुष्कलस्यास्य सन्दर्भस्य रचनया प्रकाशनेन च गायककुल-दैवतस्य परमभागवतोत्तमस्य श्रीमत्त्यागराजस्वामिनो वरिवस्यां कृत्वा-

स्मान धन्यनां निर्नीषूणां, सङ्गीतविद्यासाम्राज्ये महती प्रतिष्ठां प्राप्त-वतां श्रीयुत-मुत्तय्याभागवतमहाशयाना सर्वथा समुचितः श्लाघनी-यश्चायं श्रीमत्त्यागराजविजयाख्यकाव्यरचनाप्रकाशनसमुद्योगः विना सन्देहं मन्यामहे, सहृदयाना परितोषमुपजनयितुमलमिति, फलितमेव कामं तेषां मनोरथैरिति ।

तदिदं सम्प्रति मुद्रयित्वा प्रकाश्यमानं समुचितललितसन्नि-वेशचारु लघुटिप्पणसचिव श्रीमत्त्यागराजविजयाख्यं काव्यं न केवल प्रतिपाद्यमाहात्म्याद् यावत् कर्तृबहुमानाच्च निकाममभिनन्द-नानुग्रहं उपादेयतां चार्हति ।

इति

विद्वज्जनविधेय.,

वे. वेङ्कटरामशर्मा विद्याभूषणः.

अनन्तशयनम्.

७—१—११७

श्रीरस्तु

# श्रीमत्त्यागराजविजयम् ॥

## अथ प्रथमः सर्गः

सर्वस्य स्रष्टृ संतुष्टिं पातृ गायकसम्पदम् ।
आधिव्याधी च संहर्तृ नादब्रह्म गतिर्मम ॥ १ ॥

यो नादः सर्वभूतानां सर्ववर्णस्य चाङ्कुरः ।
यो बीजं मन्त्रकोटीनां तं नादं प्रणमाम्यहम् ॥ २ ॥

नादोत्पत्तिकरं देवं नमामि प्रणवाकृतिम् ।
मूलाधारस्थितं ज्ञानमोक्षसिद्धिप्रदं गजम् ॥ ३ ॥

नादविद्याप्रवीणां तां राग भाव लयात्मिकाम् ।
देवीं वागीश्वरीं वन्दे वीणावादनतत्पराम् ॥ ४ ॥

अज्ञानतिमिरघ्नं तमानन्दाम्बुधिवासिनम् ।
सुज्ञानतत्परं वन्दे मज्ज्ञाननयनाञ्जनम् ॥ ५ ॥

आदिस्वरस्वबीजं तमन्त्यस्वरसुसेवितम् ।
आद्यन्तरहितं वन्दे ह्यम्बिकातनयं गुहम् ॥ ६ ॥

रामे धर्मं जनेष्वर्थं कामं च श्रीपतिस्तुतौ ।
यस्त्यक्त्वा मुक्त आभाति त्यागराज तमाश्रये ॥ ७॥

तदुत्कर्षं पुमान् कोऽत्र सुष्ठु वर्णयितु क्षमः ।
यस्य प्रत्यक्षमित्राणि राम मारुति नारदाः ॥ ८ ॥

अज्ञानरवये पापपवये कवये वयम् ।
कथं प्रत्युपकुर्मोऽस्मै येन गानकलोद्धृता ॥ ९ ॥

तत्कृतीरुपजीवद्भिस्तच्चरित्रं न चिन्त्यते ।
विमृश्यते किमम्भोदस्वरूपं तोयपायिभिः? ॥ १० ॥

चतुरोऽप्याश्रमान् प्राप्तश्चतुरो रामकीर्तने ।
चतुरः पुरुषार्थान् स प्राप्नुयात् पुरुषो ध्रुवम् ॥ ११

इत्यत्र त्यागराजाख्यो गुरुरेव निदर्शनम् ।
यच्चरित्रमहं वक्ष्ये रमनारसलालसः ॥ १२ ॥

महच्चरित्ररत्नौघैर्ग्रन्थहारे मया कृते ।
चरित्रमात्रसारज्ञाः सन्तु सन्तो विवेकिनः ॥ १३ ॥

समुद्रवाससो देव्या भूम्याः शोभाप्रदायकः।
नदीमातृकभूम्याढ्यः सह्यजाक्षीरपावनः ॥ १४ ॥

मस्यशालिसुकेदारः शरभोजिनृपोद्धृतः ।
कलानां जन्मभूः सर्वसम्पदां स्थिरशेवधिः ॥ १५ ॥

महतामवताराहसोपानायितगोपुरः ।
चोलदेशो हि सम्पन्नो राजते दाक्षिणापथे ॥ १६ ॥

तत्रास्ते पावनं क्षेत्रं 'तिरुवारूरि'ति श्रुतम् ।
यत्र श्रीत्यागराजाख्यः सोमास्कन्दो विराजते ॥ १७ ॥

तत्कृपालेशसम्भूतस्तत्क्षेत्रे तस्य दीपकः ।
कश्चिद् विपश्चिदुत्तंसः शुभ्रवाङ्मनसो युवा ॥ १८ ॥

सौशील्यवर्धितश्रेयाः श्रेयोलब्धमहामतिः ।
मतिप्रणीतसद्ग्रन्थो ग्रन्थतोषितकेशवः ॥ १९ ॥

तञ्जापुरनरेन्द्रेण महाराष्ट्रकुलेन्दुना ।
षाजिराजेन भूयोभिर्बहुमानैः समुद्धृतः ॥ २० ॥

रञ्जकः स्वकृतैर्गीतैर्निजकालिकगायकान् ।
भञ्जकः स्वाश्रितैः शिष्यैरखिलानपि नास्तिकान् ॥ २१ ॥

औदार्यभूषणः सत्यभाषणो वेषवर्जितः ।
द्वेषिणां च हितान्वेषी वैदुष्यश्रीजुषां वरः ॥ २२ ॥

वेदान्ततत्त्वमर्मस्पर्शिवाग्धाराभिः सतां मनः ।
आकर्षन् कथकश्रेष्ठस्त्रैलिङ्गो ब्राह्मणोऽवमत् (कुलकं)

ईशावास्यमनस्कत्वादवदातस्वभावतः ।
गैर्वाण्यान्ध्रीगिरोश्चारुकविताभरणाच्च सः ॥२४॥

'गिरिराजकवि'नाम्ना प्रथितः पृथुमानसः ।
सत्पुत्रैः पञ्चभिः कालं निनाय न्यायवर्त्मगः ॥ २५ ॥

विप्रस्यास्य कनिष्ठस्तु तनयो विनयोज्ज्वलः ।
वाग्गेयकारकोऽलासीच्चित्रगीतिविशारदः ॥ २६ ॥

'राम एव परं ब्रह्म' त्युपास्तायं यतो हरिम् ।
ततस्तं मनुजा नाम्ना रामब्रह्माणमब्रुवन् ॥ २७ ॥

षडङ्गसहितान् वेदान् शैशवेऽधीत्य सद्गुरोः ।
तदर्थांश्च विचार्यासौ स्नातकव्रतमादधे ॥ २८ ॥

दिवा दोषा प्रगे सायं सदा रामं प्रकीर्तयन् ।
नैष्ठिकब्रह्मचर्येणानिनीषत् समय निजम् ॥ २९ ॥

कदाचित् सदयो रामः सत्सङ्गीतोद्दिधीर्षया ।
तद्भक्तिमुदितोऽवादीदेनं लोचनगोचरः ॥ ३० ॥

"अयि सौम्य! विरक्त्यालं, लोकयात्राप्रवृत्तये ।
अनुरूपगुणां कन्यां परिणीय कृती भवेः ॥ ३१ ॥

तस्यामस्य सुदेशस्य ख्यापको गायकाग्रणीः ।
सत्पुत्रः प्रतिभाशाली जगत्पूज्यो जनिष्यते ॥ ३३ ॥

अनाचारितधर्मस्य ह्यपितृऋणहारिणः ।
न स्मृता सद्गतिः प्राज्ञैरतो भूयाः सुपुत्रवान्' ॥ ३२ ॥

इति श्रुत्वा प्रणम्यामुं तदीयाज्ञां यदाऽस्मरत् ।
तदैव द्विजशार्दूलः कश्चिदेन समागमत् ॥ ३४

"राम ब्रह्मन्! वधूरत्नजनकोऽस्मि, भवान् यदि ।
मज्जामाता, सुपुत्रस्य मज्जा माता भविष्यति" ॥ ३५ ॥

इति प्रार्थयमानस्य कन्यां धन्यतमां बुधः ।
अनन्यलभ्यामभ्यर्च्यामुपयेमे विधानतः ॥ ३६ ॥

ऋतावुपेत्य तां पूतां शोभनार्यां शरद्वयम् ।
कुर्वन् कुवलयोल्लासं रेजे विष्णुपदाश्रयः ॥ ३७ ॥

कान्तां नाम्नापि शान्तां तां स साध्वीं पापसाध्वसः ।
सत्पुत्रलिप्सया धर्म्यैः क्रीडनैरप्यतोषयत् ॥ ३८ ॥

अध्यापयन् श्रुताबालानामृशन् ब्रह्मवैभवम् ।
भजंश्च जानकीजानिं कालमेव मुदाऽक्षिपत् ॥ ३९ ॥

जातु पञ्चनदक्षेत्रे मप्तस्थानमहोत्सवम् ।
प्रेक्ष्य तौ दम्पती शम्भुं तत्रत्यं च प्रणेमतुः ॥ ४० ॥

अथ तस्य गुणाढ्यस्य तनयोऽजनि कश्चन ।
बाल्येपि यत्स्वभावोऽभूत् मंजिघृक्षा समत्सरा ॥ ४१ ॥

पुत्रं पञ्चनदाधीशशिवनित्यस्मृतीच्छया ।
न जप्येशाभिधं चक्रे तद्दर्शनभवं सुधीः ॥ ४२ ॥

पञ्चापगेशनाम्नापि प्रथतोऽसौ यतः शिवः ।
ततः पञ्चापगेशेति ख्यातोऽभूद् भूसुरात्मजः ॥ ४३ ॥

सोऽपि शाखामधीत्य स्वां वेदशास्त्रविशारदः ।
अखर्वगर्वदुर्वारः पथा केनाप्यवर्तत ॥ ४४ ॥

तत्तादृक्षं सुतं प्राप्य स्वस्वभावविरोधिनम् ।
रामब्रह्मा पुना रामं प्राज्ञं पुत्रमयाचत ॥ ४५ ॥

जातेनापि सुतेनैवं पित्रोः क्षेममनिच्छता ।
पुंनाम्नो नरकात् पित्रोर्निवृत्तिस्तु कथं भवेत्? ॥ ४६ ॥

अतोऽयमतिदुःखार्तो गतिहीनो यतीश्वरम् ।
कमप्याश्रित्य वैराग्याद् भिक्षुभावमपेक्षत ॥ ४७ ॥

अपरोक्षीकृतश्रीशः समुपेक्षितसंसृतिः ।
अपेक्षितप्रदातासौ गुरुराजस्तमब्रवीत् ॥ ४८ ॥

"रामब्रह्मन्! विवेकाढ्य! विदितागम! धार्मिक! ।
साहसं भैक्षवे पक्षे साम्प्रतं ते न साम्प्रतम् ॥ ४९ ॥

गार्हस्थ्ये धर्म एव त्वं वर्तस्वेश्वरमेचकः
'न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति' ५० ॥

त्वया न ह्यकृता धर्माः नापि पुण्यमनार्जितम् ।
अथापि यदि न श्रेयस्तत्र दैवं हि बाधकम् ॥ ५१ ॥

एतस्यास्ति पुरस्येशः सर्वक्षेमप्रदायकः ।
जानेऽहं तव वंश्यानां कुलदेवमिमं शिवम् ॥ ५२ ॥

महेन्द्राय पुरा दत्तं हरिणा शिवविग्रहम् ।
मुचुकुन्दनरेन्द्रेण प्राप्तं शतमखान्मखैः ॥ ५३ ॥

लसन्तमालये दिव्ये बहुचित्रकलालये ।
मनुष्यदुष्करे यत्नाद् विश्वकर्मविनिर्मिते ॥ ५४ ॥

मनुनीतिदृशश्चोलमहीपस्य सुधर्मणः ।
गोवत्सार्थे सुतं हन्तुः प्रत्यक्षकुलदैवतम् ॥ ५५ ॥

समयाचार्यवर्यैस्तैश्चतुर्भिरपि संस्तुतम् ।
जीवन्मुक्तजनोपास्यं मन्दभाग्यदुरासदम् ॥ (कुलकं)

शिवं श्रीत्यागराजाख्यमिमं वंश्यास्तवाखिलाः ।
निषेव्यैवेप्सितं सर्वं शिवं प्रापुरिति स्थितिः ॥ ५७ ॥

'विष्णुभक्तः शिवद्वेषी, विष्णुद्वेषी शिवप्रियः ।
तावुभौ नरकं यातो यावच्चन्द्रदिवाकरम्' ॥ ५८ ॥

तस्मात् सौम्य! सदारस्त्वं सदा रामं भजन्नपि ।
सेवस्व कुलदेवं ते त्यागराजमपीश्वरम् ॥ ५९ ॥

त्वद्भक्तिभारसन्तुष्टः सर्वदोमाधवः प्रभुः ।
कल्याणानि विदध्यात्ते करुणावरुणालयः ॥ ६० ॥

तद्दयाप्रभवं पुत्रं त्यागराजाभिधं कुरु ।
स सूनुर्ब्रह्मविज्ञानी भूयात्ते कुलदीपकः ॥ ६१ ॥

त्रैलोक्यश्लाघ्यचारित्रः सङ्गीताम्बुधिपारगः ।
अन्यदुर्लभया मूर्त्या कीर्त्या चायं विजेष्यते ॥ ६२ ॥

इत्युक्त्वा विरते भिक्षौ त्रिकालज्ञे तिरोहिते ।
अगम्यमहिमानं तं प्रणनाम प्रियायुतः ॥ ६३ ॥

तदाज्ञां शिरसादाय तदा तस्याशिषस्तथा ।
सपत्नीकः शुचिर्भूत्वा त्यागराजमसेवत ॥ ६४ ॥

उञ्छवृत्त्यार्जितैरर्थैरतिथीनुपभोजयन् ।
सज्जनान् शिवमाहात्म्यं श्रावयन् शङ्करालये ॥ ६५ ॥

सुव्रतां व्रतखिन्नात्मा तां शान्तां सान्त्वयन् सदा ।
अवर्त्मगामिनं जातमुपदेशैर्वशं नयन् ॥ ६६ ॥

पञ्चषाणि स वर्षाणि कथाश्चित् कालमाक्षिपत् ।
अप्रसन्नेऽपि गौरीशे नोत्साहं सेवनेऽत्यजत् ॥ ६७ ॥

बुधवरसुतकामः सोमराजत्कपर्दं
फणिगणमणिभूषं पार्वतीश्लिष्टमूर्तिम् ।
सुरनरनिकरेड्यं त्यागराजाभिधं तं
भवमुरुभवनाशं दारयुक्तः स भेजे ॥ ६८ ॥

इति 'गायकशिखामणि'—हरिकेशनल्लूर्—मुत्तय्य—
भागवतविरचिते श्रीमत्त्यागराजविजये
प्रथमः सर्गः.

अथ द्वितीयः सर्गः ।

ऋषभध्वजकारुण्यात् तनयर्षभलिप्सया ।
सम्पदां दायकं गौर्या नायकं गायकोऽभजत् ॥ १ ॥

पयोव्रतादिकं धर्म्यं शुभपुत्रप्रदं व्रतम् ।
आचेरतुः सदाचारौ दम्पती तौ यतात्मकौ ॥ २ ॥

बहुधान्याभिधे वर्षे, मासे वैशाखनामनि ।
वलक्षपक्षे सप्तम्यां पुष्यर्क्षे रविवासरे ॥ ३ ॥

सा शान्ता सद्व्रतैस्तान्ता भान्तं पुत्रमजीजनत् ।
कलानिधिं यथा प्राची रक्तं कुवलयप्रियम् ॥ ४ ॥

श्रीरामानुग्रहो मूर्तः कीर्तिदाय्यार्तिवारकः ।
जज्ञे विज्ञाग्रतस्तस्मात् तस्यां नूनं शिशुच्छलात् ॥ ५ ।

क्व क्वेति रोदनं रामसाक्षात्काराभिलाषिणः ।
शिशोस्तस्यावगत्याऽमू दम्पती आननन्दतुः ॥ ६ ॥

सत्सङ्गीतकलोद्धारक्षुद्रार्थत्यागयोर्द्वयोः ।
अमुष्य बद्धदीक्षत्वं मुष्टिबन्धद्वयान्मितम् ॥ ७ ॥

जातकर्मादिभिः पूतं त्यागराजदयोद्भवम् ।
जातरूपहसद्रूपं त्यागराजं तमाह्वयत् ॥ ८ ॥

प्राङ्गणे रिङ्गणं कुर्वन्नर्भकैः सह सोऽर्भकः ।
भाविनीं भुवनव्याप्तां स्वयात्रां समसूचयत् ॥ ९ ॥

कल्याण्याऽमृतवर्षिण्या श्रीरागविजयाढ्यया ।
कामोदर्या गिरा चक्रे शिशुः सारङ्गमोहनम् ॥ १० ॥

नायकीकृतभूपालः श्रीरञ्जिन्या त्विषा युतः ।
षण्मुखप्रियचर्योऽयं धन्यासीमकलोऽलसत् ॥ ११ ॥

वसन्तं मेघरञ्जिन्या रविचन्द्रिकयाद्भुतम् ।
भासयन् सहनात् काममुखारीन् सामतोऽजयत् ॥ १२ ॥

एवं विधैर्निजैर्भद्रैर्बहुचित्रविचित्रितैः ।
क्रीडनैः पितरौ सन्तौ नन्दनोऽयमनन्दयत् ॥ १३ ॥

द्राविड्या देशवाचासावान्ध्रया च कुलभाषया ।
गैर्वाण्या शास्त्रवाचाऽपि मधुरालापकृद् बभौ ॥ १४ ॥

कालेन गच्छता सोऽयमथ दारिद्र्यपीडितः ।
रामब्रह्मा मनश्चक्रे गन्तुं पञ्चनदं पुरम् ॥ १५ ॥

तादृक्षमहिमोल्लासिसुताय त्वभ्यसूयवः ।
केचिन्मन्दधियोऽभूवन् क्षुद्रोपद्रवकारिणः ॥ १६ ॥

तान् परित्यज्य दूरेण दुराचारान् स सात्त्विकः ।
तत्याज त्यागराजस्य पुरमेतत् कथञ्चन ॥ १७ ॥

अथ सञ्चितपुण्यानां मञ्जुवासविजृम्भितम् ।
अवञ्चकजनैः पूर्णं क्षेत्रं पञ्चनदाभिधम् ॥ १८ ॥

कावेर्यभंगुरोत्तुङ्गतरङ्गासङ्गिमङ्गलम् ।
असङ्गिपुङ्गवातङ्कभङ्गसंघटनाङ्कितम् ॥ १९ ॥

धर्मसंवर्धनीश्लिष्टप्रणतार्तिहराप्रियम् ।
वागीशमुनिसन्दृष्टकैलासगिरिवैभवम् ॥ २० ॥

शरभोजिमहाराजस्थापितोच्चशिवालयम् ।
गैर्वाणीद्राविडीभाषाकलाशालाविलासितम् ॥ २१ ॥

यौवतश्रुतिसंवृद्धिपरा विद्याविकासिनीः ।
विद्यारत्नवतंसास्ताः शुभाः परिषदो दधत् ॥ २२ ॥

घनपाठिसदोवंशमुक्तामणिविभूषितम् ।
शास्त्ररत्नाकरप्रोत्थवादव्रातनिषेवितम् ॥ २३ ॥

पण्डितैर्मण्डितक्षोणीमण्डलैः खण्डितभ्रमैः ।
उद्दण्डवादशूरैस्तैराढ्यं न्यायविशारदैः ॥ २४ ॥

वाग्गेयकारकैर्नित्यं आजद्धरिकथोत्सवैः ।
सत्सङ्गीतरसाभिज्ञैर्गायिरत्नैर्विराजितम् ॥ २५ ॥

सौभाग्यविजितस्वर्ग वैकुण्ठजयिवैभवम् ।
कैलासहासिभक्ताढ्यमकुतोभयजन्तुकम् ॥ २६ ॥

जगाम पावने तस्मिन् मखौ सह्यसुतामृते ।
प्रणतार्तिहरं शम्भुं ददर्शात्र सुदर्शनम् ॥ २७ ॥

कवेरतनयास्नानात् कवेरतनुचेतसः ।
तस्यासीद् दृढसङ्कल्पस्तत्रैवावस्तुमा मृतेः ॥ २८ ॥

ततोऽयं परिपूतात्मा सत्या पत्न्या सपुत्रया ।
एतत् पञ्चनदक्षेत्रमध्युवास स भूसुरः ॥ २९ ॥

अष्टवर्षं कनिष्ठं तमुपनीय सुतं सुधीः ।
श्रोत्रियाग्र्यपदाम्भोजेऽध्ययनार्थमथार्पयत् ॥ ३० ॥

सकृदुच्चरितं शब्दं सकृदाकर्ण्य तत्क्षणात् ।
तदूर्ध्वमपि वक्तारं को वाऽध्यापयिता तदा ॥ ३१ ॥

अनुक्तार्थस्य शब्दस्य बह्वर्थान् शास्त्रसङ्गतान् ।
प्रशंसन् प्रतिभाशाली गुणवान् स्वयमाबभौ ॥ ३२ ॥

इत्थंभूतस्य पुत्रस्य ब्रह्मवर्चसशालिनः ।
मूर्तिरल्पापि तत्कीर्तिस्त्रिलोकीं व्यानशे क्षणात्

तञ्जापुरनराधीशः पाजिराजः सुधार्मिकः ।
तं दृष्ट्वा धन्यजन्मानं निजं जन्माप्यपावयत् ॥ ३४ ॥

तं विप्रमुञ्छवृत्त्यैव देहयात्रां विधायिनम् ।
कथञ्चिद् ग्राहयामास गृहमेकं महीपतिः ॥ ३५ ॥

तदैव निःस्पृहो विप्रस्तद्गेहं स उदारधीः ।
अकिञ्चनाय विप्राय शुभ्राय प्रददौ मुदा ॥ ३६ ॥

'श्रीमञ्जना'ख्यवीथ्यन्ते गृहे पित्रार्जिते मिते ।
उवास वासवादीड्यसुतरत्नसमन्वितः ॥ ३७ ॥

ज्येष्ठस्य जन्ममात्रेण गरिष्ठस्य च गर्वतः ।
दुष्टभूयिष्ठनिष्ठस्य जप्येशस्य मनस्यभूत् ॥ ३८ ॥

"पाश्चात्यजनदुर्नीतपरिष्कारविषोल्बणे ।
न कलौ प्राच्यपद्धत्या वैदिकया सुखमश्महे ॥ ३९ ॥

शरणीकरणीया मे धरणीधरनायकाः ।
न शास्त्रं नापि देवो मे सुखदाता प्रदृश्यते ॥ ४० ॥

अतोऽहं पूर्विकाचारान् श्रौतस्मार्तक्रियाकुलान् ।
उज्झित्वा लौकिकाचारैर्भवेयं धनसङ्ग्रही ॥ ४१ ॥

न भक्त्या पूर्यते कुक्षिः न शास्त्रैश्छाद्यते वपुः ।
न गीतैः प्रीयते भार्या सर्वो द्रव्यैकसुग्रहः ॥ ४२ ॥

द्रव्येण प्राप्यते विद्या सभ्यता गुरुता तथा ।
लोकैकपूज्यता चान्ते मुक्तापि धनाद् भवेत् ॥ ४३ ॥

वेदेषु सर्वशास्त्रेषु निपुणोऽपि विवेकदृक् ।
नटो भटोऽपि वा भूत्वा द्रव्यमेव समार्जयेत्" ॥ ४४ ॥

इति स्वबुद्धिमात्रोत्थविमर्शजनितभ्रमः ।
स्वगुणानुगुणां कन्यां परिजग्राह सार्थिकाम् ॥ ४५ ॥

श्रीरामभजनासक्तं द्रव्यार्जनपराङ्मुखम् ।
आढ्यं तृणाय मन्वानं तातं परिजहास सः ॥ ४६ ॥

त्यागराजस्तु विज्ञानात् श्रेयो भूयोऽवधारयन् ।
शिश्रिये श्रितकल्पद्रून् श्रुतवयानमत्सरान् ॥ ४७ ॥

आचार्याद् पूर्णमादाय द्विगुणं च स्वमेधया ।
चतुर्गुणं सतीर्थ्यैश्च प्राप्य वैदुष्यसम्पदम् ॥ ४८ ॥

वेदे शास्त्रे तथा गीते काव्येऽधीती द्विजात्मजः ।
त्यागराजो बुधान् प्रश्नान् पृष्ट्वा चक्रे निरुत्तरान् ॥

बहुभिर्बहुधा शास्त्रे गभीरे विविधे यदा ।
प्रश्नोऽकारि मपद्येव तत्तदुत्तरमब्रवीत् ॥ ५० ॥

तदा तदा विरामेषु सङ्गीताम्बुधिपारगम् ।
"सोण्ठी वेङ्कटरामा"ख्यं वैणिकं स समाश्रितः ॥ ५१ ॥

तत्सेवानिरतो नित्यं सम्प्रदायानुवर्तिनीम् ।
सत्सङ्गीतकलां लक्ष्यलक्षणैः सममाददे ॥ ५२ ॥

सङ्गीतशास्त्रविख्यातान् सर्वान् रागान् सभेदकान् ।
लक्ष्यपूर्वमधीत्यार्यं तदालापपटुर्बभौ ॥ ५३ ॥

भाषाङ्गानि क्रियाङ्गानि रागाङ्गानि च सर्वशः ।
रागान् विविच्य विज्ञाय रक्तिमानं सदाऽन्वभूत् ॥ ५४ ॥

गीतेष्वलङ्क्रियास्वेवं कीर्तनेषु पदेषु च ।
अधीतेषु च वर्णेषु व्यस्राक्षील्लक्ष्मसङ्गतिम् ॥ ५५ ॥

ततो बह्वर्थगम्भीरा बहुरागविलासिनीः ।
वल्लीः कृत्वा कृतीरेष कविवर्यो व्यराजत ॥ ५६ ॥

संस्कृतेनान्ध्रवाचापि तत्र तत्र स्थितं हरिम् ।
तुष्टाव कीर्तनैरर्थपुष्टैर्नैजैर्मनोहरैः ॥ ५७ ॥

स्वपितामहतातादिरचिता रुचिराः कृतीः ।
सर्वा अभ्यस्य मित्रेषु तत्प्रचारमपि व्यधात् ॥ ५८ ॥

वाग्गेयकारकं चारुशारीरश्रीविराजितम् ।
बालमेनमुपेत्यैवं बुधा जातु मुदोचिरे ॥ ५९ ॥

"रामोल्लासिहृदारामब्रह्मपुत्र! जितेन्द्रिय ।
त्रिलोकीव्याप्तसत्कीर्ते सुस्वरार्णवपारग ॥ ६० ॥

महती महती वीणा तव कुत्र निगूहिता ।
नैरस्यं किं नु ते नाके येन क्षोणीमवातरः ॥ ६१ ॥

कलौ सङ्कीर्तनाद् विष्णोः सुप्रापा मुक्तिरित्यतः ।
मुने किं नररूपेण कावेरीतीरमागमः ॥ ६२ ॥

सुरासक्तिं सहस्राक्षक्षुद्रवृत्तिमनिद्रताम् ।
असहिष्णुः किमायासीर्वस्तुं पञ्चनदे मुदा ॥ ६३ ॥

अथवा संस्कृतैः शब्दैरनुभूतां तु माधुरीम् ।
प्राकृतेऽप्यान्ध्रभाषायामुपलब्धुं किमुद्यमः ॥ ६४ ॥

गन्धर्वमोहको गीतैरतिविद्याधरः स्वयम् ।
मितम्पचमतीनस्मानतिशेषे किमद्भुतम्" ॥ ६५ ॥

इत्यलं बाल एवास्मिन् बुधलोककुलेडिते ।
पूर्वेषां विदुषां नामान्यस्मरन्न बुधा मुधा ॥ ६६ ॥

सद्विद्याप्राप्तये सन्तं गुरुराजमसेवत ।
क्षुद्रार्थत्यागिनानेन श्रियतेऽत्र कुतोऽपरः ॥ ६७ ॥

श्रीरामप्रीतये गायन् पूजयन् तन्मुदे सदा ।
श्रीरामभक्तसंयुक्तो विरेजेऽयं निरामयः ॥ ६८ ॥

सङ्गीतज्ञानिनां वर्याः दीक्षिताचार्यपुङ्गवाः ।
एतस्य गानमाधुर्यं श्रुत्वा दर्पभरं जहुः ॥ ६९ ॥

"वृथैव भुवि जातोऽहं मया भूमिरचञ्चला ।
मातुर्यौवनहा सोऽसीत्येषामासीद् हि निर्णयः ॥ ७० ॥

केचित्तच्छिष्यतां लब्ध्वा सत्सङ्गीतकलेप्सवः ।
ऐहिकामुष्मिके धर्म्ये फले प्रापुर्यशस्विनः ॥ ७१ ॥

अमुष्य गानसन्तुष्टैर्धनाढ्यैः पारितोषिकम् ।
यद्यदादरतोऽदायि तद्दीनेभ्योऽस्पृशन् ददौ ॥ ७२ ॥

यद्यसावगृहाण्यत् तद् दत्तमाप्तमैर्मुदा ।
चिरानुवृत्तं रिक्तत्वं तन्न्यवर्तिष्यतान्वये ॥ ७३ ॥

विज्ञाय चञ्चलं द्रव्यमापदां प्रथमास्पदम् ।
स राममन्निधेरन्यं निधिं स्वप्नेऽपि नास्मरत् ॥ ७४ ॥

मन्दाक्रान्ते जगति बहुधा जातवैराग्यलक्ष्मीः
स्वाभ्यस्तानां यदधिगमनाच्चारिताय्यं कलानाम् ।
येन श्रेयः स्थिरमथ यतो ब्रह्मसब्रह्मचर्या
तत्तादृक्षे समुचितपथे त्यागराजो विरेजे ॥ ७५ ॥

इति 'गायकशिखामणि'–हरिकेशनल्लूर्–मुत्तय्य–
भागवतविरचिते श्रीमत्त्यागराजविजये
द्वितीयः सर्गः ।

अथ तृतीयः सर्गः ।

गां धारयिता तातस्त्यागराजं निजां शुभाम् ।
गान्धर्ववेदतत्त्वज्ञं कन्यकामप्यधारयत् ॥ १ ॥

गृहकृत्येषु दासीव सौन्दर्ये कमलेव च ।
मातेवाव्याजवात्सल्ये स्थितां मन्त्रीव बोधने ॥ २ ॥

विशिष्टकुलसम्भूतां विनयाभरणोज्ज्वलाम् ।
त्यागराजो विशालाक्षीं पर्यणैषीत् स कन्यकाम् ॥ ३

कन्या सा रुचिरं रूपं माता वित्तमनुत्तमम् ।
पिता च सुश्रुतं बन्धुः कुलं श्रेष्ठं तथाप्नुवन् ॥ ४ ॥

तया सार्धं शुभान् धर्मान् आचरन् श्रुतिचोदितान् ।
गार्हस्थ्येऽपि महाधर्मा ब्रह्मचर्यमचीचरत् ॥ ५ ॥

उञ्छवृत्त्यैव भक्तानां सर्वमिष्टं प्रपूरयन् ।
आतिथ्ये हरिसेवादौ निरतो रतिमाययौ ॥ ६ ॥

'पितरौ प्रथमो देव' इति मत्वा विदांवरः ।
शुश्रूषां श्रद्धया चक्रे पित्रोः पितृजनप्रियः ॥ ७ ॥

जप्येशं तामसं त्यक्त्वा द्रव्यमात्रार्जने रतम् ।
सात्त्विके त्यागराजेऽस्मिन् पितरौ तृप्तिमापतुः ॥ ८ ॥

उपेक्ष्य रावणं मत्तं सदा रामावलम्बने ।
विभीषणे तुतोषालं त्यागराजे शुभो जनः ॥ ९ ॥

अथासाज्जातु जप्यशहृदये मतिरीदृशी
जपतः सर्वदा द्रव्यमहामन्त्रमतान्द्रितम् ॥ १० ॥

"पितुर्मे गृहमस्तीदं षाजिराजसमर्पितम् ।
इदमप्यपरस्मै मे तातो नूनं प्रदास्यति ॥ ११ ॥

केनासौ न हि भूपेन मम नाद्रियते पिता ।
का वास्मै सम्पदस्तुष्टैर्न दीयन्ते मुहुर्मुहुः ॥ १२ ॥

अकालज्ञायमज्ञातद्रव्यदौर्लभ्यरक्षणः ।
अविवेकितया हन्त तृणाय मनुते धनम् ॥ १३ ॥

नरेन्द्रैः श्रेष्ठिभिर्मित्रैर्यद्यद् दत्तं चिरादपि ।
तत्सर्वं संगृहीतं चेन्मदन्यः को जगत्पतिः ॥ १४ ॥

आत्मा वै पुत्रनामासीत्येतद्वाक्यं कथ मृषा ।
यदेष त्यागराजोऽपि पित्र्यैकपरायणः ॥ १५ ॥

मद्गौरवेण यद् दिष्ट्या मन्मित्रैरर्पितं वसु ।
तदपि त्यजतानेन सार्थनाम्ना कुलं हतम् ॥ १६ ॥

ग्राहं ग्राहं सुधीः पश्येदचिराद् बहुसम्पदः ।
त्याजं त्याजं विमूढस्तु किं नु पश्यति भूतले ॥ १७ ॥

कणशः साधयन्नर्थं न जातु परिभूयते ।
बहुशो नाशयन्नर्थं कदा क्षेममवाप्नुयात् ॥ १८ ॥

अर्थानां विषये नाम्बा न तातो नापि सोदरः ।
दाक्षिण्याद् हन्यते श्रेयो निर्दाक्षिण्यः सुखी भवेत् ॥

खिन्नफालः परान् नवा संगृह्णामि वसून्यहम् ।
राम रामेत्यनायासं भुज्यते तत् परैर्जनैः ॥ २० ॥

अतोहमचिरेणार्थं पितुः सर्वं विभाजयन् ।
मद्भागं पृथगादाय स्वतन्त्रः स्यां सदा सुखी" ॥ २१ ॥

इति निश्चित्य जप्येशः कुप्यन् ताताय जातु सः ।
पित्रार्जितं धनं सर्वं विभेजे विषमाध्वना ॥ २२ ॥

प्रत्यग्रं सारवत् स्थायि बहुमूल्यमनाकुलम् ।
सर्वं स्वभाग आदाय सर्वज्यैष्ठ्यमदर्शयत् ॥ २३ ॥

अहैमत्वादरौप्यत्वादनूनत्वाद्धरेस्तनुः ।
असारेत्यवगन्त्राहो तत्त्यजेऽनेन पापिना ॥ २४ ॥

त्यागराजो निजे भागे भ्रात्रा दत्ते कथञ्चन ।
स्ववंश्यैः पूजितं रम्यं सीतालक्ष्मणसंयुतम् ॥ २५ ॥

श्रीरामविग्रहं त्वेकं जग्राहेष्टमविग्रहम् ।
गृहस्यान्तिमपार्श्वेऽमुं प्रतिष्ठाप्य रमापतिम् ॥ २६ ॥

उषस्याशु प्रबुद्धोऽयं स्नातः सह्यसुतामृते ।
ऊर्ध्वपुण्ड्रलसद्गात्रस्तुलसीमभ्यवन्दत ॥ २७ ॥

श्रीरामं स्वकृतैः पश्चात् कीर्तनैरार्तिनाशकैः ।
भजन्नेष द्विजश्रेष्ठः प्रातः कालमयापयत् ॥ २८ ॥

ततः कतिपयान् शिष्यान् रामसेवाधुरन्धरान् ।
सङ्गीतं शास्त्रतत्त्वं च स्फुटमाध्यापयद् बुधः ॥ २९ ॥

मध्याह्ने स पुनः स्नातः शुचिः श्रीरामविग्रहम् ।
उपचारैः स्मृतिप्रोक्तैरार्चत् षोडशभिः क्रमात् ॥ ३०

विनीतया तया स्नातपूतया प्रिययाऽऽदरात् ।
यत् स्वादु पक्वमन्नाद्यं तत् परस्मै न्यवेदयत् ॥ ३१ ॥

श्रीरामार्पितशेषेण प्रसादेन ततोऽतिथीन् ।
सन्तर्प्य पितृतः शिष्टं सपत्नीकः स आददे ॥ ३२ ॥

अपराह्णे पुराणादिश्रवणश्रावणादिभिः ।
आनन्दतुन्दिलस्वान्तानतानीदखिलान् जनान् ॥ ३३ ॥

सायं सन्ध्यामुपास्यायं सशिष्यः सह्यजातटे ।
पुण्यमण्टपमध्यस्थं शिवं तुष्टाव कीर्तनैः ॥ ३४ ॥

प्रदोषे दोषहीनोऽयमुपगम्य शिवालयम् ।
अस्तोकमहिमाऽस्तौत् तं प्रणतार्तिहरं हरम् ॥ ३५ ॥

धर्मसंवर्धनीं देवीं प्रणम्य च शिवप्रियाम् ।
दक्षो दक्षिणकैलासे ब्रह्मतत्त्वं व्यचारयत् ॥३६ ॥

अथागत्य निजं गेहं रामं नीराजनादिभिः ।
सन्तोष्य शाययित्वा तं निशां निन्येऽनिशं भजन् ॥

विश्रान्ते हीन्द्रियग्रामे चित्ते च निरुपद्रवे ।
सुप्तवद् युक्त आसीनः परं ब्रह्म हृदागमत् ॥ ३८ ॥

एवं प्रतिदिनं यस्य शुभाश्चर्या विरेजिरे ।
संसारे स कथं मज्जेत् पद्मपत्रमिवाम्भसि ॥ ३९ ॥

पुत्रात् शतगुणा पुत्रीत्येतत् तत्त्वं प्रकाशयन् ।
विधिरस्मै शुभामेकामदात् सीताभिधां सुताम् ॥ ४०

ध्यायं ध्यायं दयालुं त्रिभुवनशरणं रामचन्द्रं सुरेन्द्रं
पायं पायं रसज्ञो हरिगुणगणसद्गीतपीयूषसिन्धुम् ।
चारं चारं स्ववंश्यैः शिवपदनिरतैः क्षुण्णवर्त्मन्यदुष्टे
राजं राजं स राजावलिविनतपदस्त्यागराजो विजिग्ये ॥

इति 'गायकशिखामणि'–हरिकेशनल्लूर्–मुत्तय्य–
भागवतविरचिते श्रीमत्त्यागराजविजये
तृतीयः सर्गः.

अथ चतुर्थः सर्गः ।

मध्यमे भुवनेऽमुष्मिन् महाधर्मकृतिक्षमे ।
मतिमान् श्लाघ्यचर्योऽयं त्यागराजो व्यराजत ॥ १ ॥

एकेन त्यागराजेन धुरि पुत्रवतां स्थितः ।
अवाप महतीं कीर्तिं रामब्रह्मा कृती बुधः ॥ २ ॥

पित्रा पुत्राय कर्तव्यमिदमस्ति मनीषिणा ।
यथाऽसौ बुधसङ्घेषु प्रथमं स्थानमावहेत् ॥ ३ ॥

पुत्राद्धि पितुराप्तव्यमिदमस्ति विवेकिनः ।
यदेतत् पितृताप्राप्त्यै कियत् तप्तमिति स्तुतिः ॥ ४ ॥

राघवः पितृसेवासु प्रह्लादो हरिसेवने ।
नारदः कीर्तने विष्णोरभासीद् भूसुरात्मजः ॥

श्रीरामभजनासक्तमसक्तं विषयेष्वमुम् ।
पितरौ निजसेवायां नायासयितुमैच्छताम् ॥ ६ ॥

स्वसेवानिरतस्यास्य सुतस्य हरिपूजने ।
मा भूत् प्रत्यूहलेशोऽपीत्यवधार्यैव तत्पिता ॥ ७ ॥

एनं षोडशवर्षीयं प्राप्तमात्रसुयौवनम् ।
मातृदारपरित्राणदक्षमक्षरसेविनम् ॥ ८ ॥

समर्प्य रामपादाब्जे प्रसृत्य भुवने यशः ।
विसृज्य धरणौ देहं ब्रह्मभूयं गतोऽभवत् ॥ ९ ॥

अतः कतिपयैर्मासैः स्वभर्तृविरहाकुला ।
कृतकृत्या च सा शान्ता शान्ताऽभूद् भवबन्धनात् ॥

ससारात् दुस्तरादस्मात् सज्जनानुद्दधीर्षवः ।
जायन्तेऽथ कृते कृत्ये तिरोदधति देवताः ॥ ११ ॥

जप्येशस्यानुजः पित्रोर्निवापविधिदीक्षितः ।
पितरौ पितृवर्गेषु संयोज्याब्दानतर्पयन् ॥ १२ ॥

स पृथक् त्यागराजस्तु रामचन्द्रोपशोभिते ।
भवने कुत्रचित् सत्या साकं कालमयापयत् ॥ १३ ॥

कदाचित् करुणासिन्धुः काञ्चीपुरविभूषणम् ।
कश्चित् विपश्चिदागत्य त्यागराजं तमानमत् ॥ १४ ॥

अदृष्टपूर्वमात्मानमादरेण प्रणामिनम् ।
तं दिव्यमहिमोपेतं वीतकाममचोदयत् ॥ १५ ॥

भगवन् परया प्रीत्या मन्दभाग्यस्य मे गृहम् ।
पावयन् स्वयमायातः कः स्यादन्यो महेश्वरात् ॥ १६ ॥

सौम्याशु सदयं ब्रूहि प्रेप्सितं ते जितेन्द्रिय ।
श्रीरामभक्तदासेन मया शक्यं विधीयताम् ॥ १७ ॥

महतां भवतामाज्ञां श्रीरामकरुणाबलात् ।
कथञ्चिदाशु सम्पूर्य कृतकृत्यो भवाम्यहम् ॥ १८ ॥

इति तच्चरणाम्भोजे प्रणम्य विनयान्मुहुः ।
प्रार्थितं सार्थजन्मानं तमाचष्ट नतेष्टदः ॥ १९ ॥

अयि भद्र! विरक्तोऽहं तुरीयाश्रमसंस्थितः ।
प्राप्तव्यं नास्ति मे किञ्चित् त्रिलोक्यां ब्रह्मदृश्वनः ॥ २० ॥

अथापि ब्रह्मदेवेन चोदितोऽहं दयालुना ।
भूयः श्रेयः प्रदातुं ते समीपं तु समागमः ॥ २१ ॥

आराध्य पार्वतीनाथं भूयसा तपसा चिरम् ।
तन्मुखाब्जान्मया प्राप्ति 'तारकं' भवतारकम् ॥ २२ ॥

इमं मन्त्रमहं जप्त्वा शतं कोटीः सुसिद्धिभाक् ।
शुद्धाय पक्वचित्ताय तुभ्यं चोपादिशाम्यहम् ॥ २३ ॥

सदयं हृदये रामं ध्यायन् आयन्त्रितेन्द्रियः ।
जपेः षण्णवतिं कोटीरिमं मन्त्रमतन्द्रितः ॥ २४ ॥

अणिमाद्यष्टसिद्धीनां प्रापकं पापहापकम् ।
परस्य ब्रह्मणः साक्षात्कारतन्मयताप्रदम् ॥ २५ ॥

अष्टाक्षरी हरेः पुण्या शिवपञ्चाक्षरी तथा ।
मन्त्रान्तराणि यत्पार्श्वे सूर्ये हिमकणा इव ॥ २६ ॥

बहुनाऽथ किमुक्तेन यद्यदिच्छसि वैभवम् ।
तत्सर्वं राममन्त्रेण प्राप्नुयास्त्वं न संशयः ॥ २७ ॥

इत्युक्त्वा रामभक्तोऽमुं शुभं मन्त्रं महात्मने ।
श्रुत्युक्तधर्मदक्षाय श्रुत्युक्त्योपदिदेश सः ॥ २८ ॥

क्षणेन विरते तस्मिन् द्विजवर्ये तिरोहिते ।
तं कञ्चिदर्चनीयाङ्घ्रिं देववर्यं विचिन्त्य सः ॥ २९ ॥

तं मनुं मनुजादर्शः प्रत्यहं श्रद्धयानतः ।
सपादलक्षमावृत्ती रामनाम्नां रहोऽजपत् ॥ ३० ॥

श्रीरामसन्निधावेवं जापं जापमिमं मनुम् ।
समाभिः पञ्चभिः सोऽस्य समां संख्यां समापयत् ॥

समाप्तिदिवसे तस्मिन् स माधवकृपातुरः ।
समाहितमना रामं भजन् बह्वीः स्तुतीर्जगौ ॥ ३२ ॥

अनन्यमानसे तस्मिन् रामदर्शनदीक्षिते ।
कथं स करुणासिन्धू राघवो न प्रसीदति ॥ ३३ ॥

क्षणेन केनचित् तस्य गृहद्वारमताड्यत ।
तच्छ्रुत्वा तत्सती द्वारमुद्घाट्याशु ददर्श सा ॥ ३४ ॥

तदा दाशरथिः श्रीमान् जानकीलक्ष्मणावृतः ।
हनूमत्सेव्यपादाब्जो नीलमेघजयिप्रभः ॥ ३५ ॥

कोदण्डमण्डिताहीशकरः सदभयप्रदः ।
दुर्दर्शनिजसौन्दर्यश्चिरेणापि तपस्विभिः ॥ ३६ ॥

नीरजाक्षो निरालेपो दम्पतिभ्यां दृशा पपे ।
तदानीं तु तदानीतसार्थक्याक्षिमतोर्द्वयोः ॥ ३७ ॥

अपारतोषवाराशिः प्रावहत् स्तवकैतवात् ।
चिन्तामणिं यथा दीनो जन्मान्धोऽक्षि यथा पटु ॥

मुमुक्षुश्च यथा ज्ञानं तथैषोऽमुमवाप्तवान् ।
तं देवं भक्तिसन्तुष्टं कुटिलाश्रममागतम् ॥ ३९ ॥

बहिर्दृष्ट्याऽप्ययं पीत्वाऽनन्दतुन्दिलमानसः ।
अतिमात्रनिपीतं तद् रामणीयकमीशितुः ॥ ४० ॥

विदार्य हृदयं गीतिच्छलादस्य मुखाद् ययौ ।
स रामस्तेन सन्दृष्टश्चिराय परितोषकः ॥ ॥४१ ॥

समपत्स्यत यद्याशु न तिरोऽधास्यत प्रभुः ।
श्रीरामदर्शनान्मोदप्रवाहस्तादृशो भृशम् ॥ ४२ ॥

तत्तिरोधानपाषाणप्रतिबद्धोऽभवत् क्षणम् ।
ततः स्वमवबुद्ध्यायं श्रीरामकरुणां स्मरन् ॥ ४३ ॥

निरर्गलं निजैर्गीतैरस्तौद्रामं कृपार्णवम् ।
'कुतस्ते न दया भूयात्' इति प्रारभ्य राघवम् ॥ ४४ ॥

आन्ध्र्यैव मातृवाचामुं तुष्टावेष्टप्रदं कविः ।
असारतरसंसारदुराचारविदारिणीः ॥ ४५ ॥

अमन्दगुणसान्द्रश्रीरामचन्द्राभिवन्दिनीः ।
संस्कृतप्रचुरा नूलपथबद्धसुमेळकाः ॥ ४६ ॥

देशीकर्णाटसङ्गीतविचित्रसरणिस्पृशः ।
त्यागराजनुतेत्यादिपदैरन्ते च मुद्रिताः ॥ ४७ ॥

अनरस्तोत्रसम्बन्धा अविष्णुस्तुतिवर्जिताः ।
बालैरपि सुगानांशाः पण्डितैरपि दुर्गमाः ॥ ४८ ॥

आपादचूडचार्वङ्गीः वेदान्तार्थविजृम्भिताः ।
सर्वलक्षणसम्पन्नाः स्तुती रचितवांस्ततः ॥ ४९ ॥

तच्छिष्यैर्विनयोत्तंसैर्दिक्षु विख्यापिताः शुभाः ।
आकर्ण्य रसिकः को वा कृती न मुमुदे परम् ॥ ५० ॥

रामशेषाभिधाः शास्त्रिपुङ्गवाः गानकोविदाः ।
भाष्यं-कृष्णाभिधानाश्च शास्त्रिणो गायिशेखराः ॥

अपरे धरणीपालाः संस्कृतान्ध्रीविशारदाः ।
पौराणिकास्तथा शिष्टा वेदान्तत्रयवेदिनः ।५२ ॥

सर्वेऽमुं त्यागराजाख्यं सत्सङ्गीतोद्धिधीर्षया ।
सञ्जातं धरणौ कश्चिद् गन्धर्वं तं चचक्षिरे ॥ ५३ ॥

इत्थं प्रसिद्धकविगायकशेखरोऽयं
द्वाविंश एव वयसा वचसातिचारुः ।
रामप्रियोऽच्छमनसा तपसा तपस्वी
श्रीत्यागराजविबुधो ववृधेऽभिमान्यः ॥ ५४ ॥

इति 'गायकशिखामणि'–हरिकेशनल्लूर्–मुत्तय्य–
भागवतविरचिते श्रीमत्त्यागराजविजये
चतुर्थः सर्गः. ।

अथ पञ्चमः सर्गः ।

पञ्चयन् स गुणान् विष्णो रञ्जयन् रसिकान् जनान् ।
सञ्चिकाय महत् पुण्यं मञ्जुगानतपोधनः ॥ १ ॥

मन्दिरे सुन्दरं रामं वन्दारुसुरवन्दितम् ।
आनर्च प्रत्यहं भक्त्या स्ववंशतिलकार्चितम् ॥ २ ॥

देवगेहे प्रतिष्ठाप्य मणिमण्टपमुज्ज्वलम् ।
तन्मध्ये जानकीजानिं प्रसाध्य मणिभूषणैः ॥ ३ ॥

विष्णुनामसहस्रेण प्राच्र्य पुष्पैः सुगन्धिभिः ।
दिनोत्सवैस्तथा पक्षमासवात्सरिकोत्सवैः ॥ ४ ॥

गीतैर्वाद्यैश्च नृत्तैश्च हरेर्महिमवर्णनैः ।
कथालापैः समान् भक्तान् नास्तिकानप्यतोषयत् ॥ ५ ॥

श्रीरामनवमीं पुण्यामुत्सवैर्विविधैः शुभैः ।
मिष्टान्नभक्ष्यदानैश्च शोभनोऽयमशोभयत् ॥ ६ ॥

श्रीरामस्य ससीतस्य मुदा डोलोत्सवं तथा ।
वसन्तोत्सवमप्येष वाद्यगीतैरवर्तयत् ॥ ७ ॥

मैथिल्या सह कौशेयसुमशय्योपशायिनम् ।
रामं नीलाम्बररागानैः क्षणमस्वापयद् विभुम् ॥ ८ ॥

निष्कामे निष्कलङ्केऽस्मिन् निराधारे च निर्धने ।
लोकैकश्लाघ्यतां याते मूर्खोऽसूयां कथं त्यजेत् ॥ ९ ॥

यून्यस्मिन् गानकौशल्यात् सौशील्याच्च विरक्तितः ।
पूज्यमाने नृपैः सर्वैः किञ्चिज्ज्ञानां तु का कथा ॥ १० ॥

वयसा द्रविणैर्भूपबहुमानैश्च ये पुरा ।
प्रख्यातास्ते समेऽभूवन् मिहिरे हिमशीकराः ॥ ११ ॥

एतस्मिन् राजति प्राज्ञे ते कुत्रापि निलिल्यिरे ।
भास्वतः पुरतो भायात् कथं तारावलिर्दिवि ॥ १२ ॥

अभ्यसूयोस्तदा कस्याप्यपवादं निशम्य सः ।
स्वकृतैः स्वरसाहित्यैः स्वरज्ञत्वमदर्शयत् ॥ १३ ॥

"रामैकव्यग्रचित्ताय निरुपद्रवजीविने ।
मह्यमेतेऽभ्यसूयन्तो हन्त मा यासिषुः क्षतिम्" ॥ १४ ॥

इत्येव मूर्खलोकेषु धनमत्तेषु केषुचित् ।
अन्वतापीदसौ तापं सञ्जिहीर्षुः सदा सताम् ॥ १५ ॥

अथ जातु शनेर्घस्रे प्रातः मिष्णासुरालये ।
तैलाभ्यक्तशिराः केनाप्यैक्षि भिक्षुवरेण सः ॥ १६ ॥

रीणतैलेन शीर्षेण वपुषा मितवाससा ।
श्रद्धापूर्णेन चित्तेन तस्य स्वागमनं व्यधात् ॥ १७ ॥

अभिवाद्य यतीशं तमकालेऽपि समागतम् ।
आसने चोपवेश्यार्यं सदारः समयाचत ॥ १८ ॥

"वन्दारुनतकर्मन्दिवृन्दवन्दित सुन्दर ।
इन्दिरावरसन्तोषान्मन्दिरं मे समागमः ॥१९ ॥

अवाप्तजनुषा क्षोण्यां मनुष्येण बहुश्रिया ।
प्राप्तव्येषु हि भद्रेषु प्रथमं यतिदर्शनम् ॥ २० ॥

अगम्यमहिमाऽनिच्छः स्वयं मे कुटिलं गृहम् ।
यदृच्छयागतो भैक्ष्यं मे गृहीतुमिहार्हसि ॥ २१ ॥

अथ दूरितकामस्य जगद्दुरितहारिणः ।
भवतस्तारकस्याज्ञां भवतः पूरयाम्यहम्" ॥ २२ ॥

इति प्रार्थयमानस्य त्यागराजस्य धर्मिणः ।
श्रद्धाभक्तिभरैस्तुष्टो यतिराजस्तमब्रवीत् ॥ २३ ॥

"प्रीतोऽस्मि तव पूजाभिर्भैक्ष्यमप्यस्तु ते गृहे ।
तवैवैकं गृहं मेऽभूद् धर्मद्वारमनावृतम् ॥ २४ ॥

मां विद्धि धर्मपात्रेषु क्षेत्रेषु भुवनेऽखिले ।
दृष्टेदेवं सुसङ्गीतलालसं रामसेवकम् ॥ २५ ॥

आकर्ण्य धन्यजन्मानं त्यागराजाभिधं द्विजम् ।
अस्मिन् पञ्चनदक्षेत्रे वसन्तं द्रष्टुमागमम् ॥ २६ ॥

तदीया भुवि विख्याता कृतीर्भक्तिरसोज्ज्वलाः
तन्मुखादेव शुश्रूषुर्मृगयेऽमुं प्रयत्नतः ॥ २७ ॥

अपि जानासि कुत्रास्ते गुणावासः स तापसः" ।
इति वादिनमानम्य त्यागराजोऽब्रवीन्मुदा ॥ २८ ॥

"अयि कारुणिक द्रष्टुं यमासीत् ते परिश्रमः ।
स मूढस्त्वहमेवास्मि गानदिङ्मात्रदर्शनः ॥ २९ ॥

भवता ये गुणाः प्रोक्ता न ते सन्ति मयि प्रभो ।
भवदुक्तेन नाम्ना तु सोऽहमप्यस्मि मन्दधीः ॥ ३० ॥

मदन्यः कोऽपि तादृक्षमहिमा भुवि सम्भवेत् ।
न जाने तमहं प्राज्ञं कृतिनं कृतविद्यकम् ॥ ३१ ॥

आदेशो यदि यज्ज्ञातं किञ्चिन्मन्दधिया मया ।
तद् गीतमपि गास्यामि तत्र दोषजिहीर्षया ॥ ३२ ॥

मयाल्पमतिना लक्ष्यलक्ष्मगन्धमजानता ।
कीर्तितेऽपहरेद्दोषं रामप्रीतिकृते कृते" ॥ ३३ ॥

इत्युक्त्वा मञ्जुलं किञ्चित् कीर्तनं स्वकृतं मुदा ।
तदैव सरसं गायन्नपारं मोदमातनोत् ॥ ३४ ॥

श्रवःपुटेन तद् गीतं निपीय स सुधोपमम् ।
अपारे तोषवाराशौ निमग्नोऽभूद् यतीश्वरः ॥ ३५ ॥

अथैनं मुनिसिंहोऽयमवादीद् गायकोत्तमम् ।
"न वाचः सन्ति पर्याप्तास्तव वर्णयितुं कृतीः ॥ ३६ ॥

माधुर्यं श्रुतिसाङ्गत्यं रागालापनचातुरीम् ।
महापरिश्रमैकाप्यं वैदुष्यं च तवेदृशम् ॥ ३७ ॥

सत्पात्रे राघवस्तोत्रे विनियुक्तं विशिष्यते ।
ईदृशैस्तोषितो गीतै रसिको राघवो ध्रुवम् ॥ ३८ ॥

प्रसन्नः क्षिप्रमश्राभस्तवाभीष्टं प्रदास्यति ।
तद्भक्ता यत्र गायन्ति तत्रैव स हि तिष्ठति ॥ ३९ ॥

भूतले दुर्लभं जीर्णतालपत्रकुलात्मकम् ।
इमं प्राचीनमुद्ग्रन्थं रक्ष गेहे सुरक्षितम् ॥ ४० ॥

यावताहं क्षणात् स्नात्वा सद्यजातामृतोर्मिषु ।
आगमिष्यामि ते गेहं भैक्ष्यस्वीकरणोत्सुकः" ॥ ४१ ॥

इत्यादिश्य यतिश्रेष्ठस्तं ग्रन्थं तत्कराम्बुजे ।
निक्षिप्य निःस्पृहः क्वापि निश्चक्राम हसन्मुखः ॥ ४२ ॥

स्नात्वाथ पूजयित्वेशं पाचयित्वामृतोपमम् ।
त्यागराजो यतेर्मार्गं सोत्कण्ठं प्रत्यवैक्षत ॥ ४३ ॥

न विप्रवरसद्मानि न नदी नेश्वरालयः ।
न पन्थास्तत्यजेऽनेन यत्यन्वेषणचारिणा ॥ ४४ ॥

"दृष्टनष्टः स कर्मन्दी न चेल्लोचनगोचरः ।
न भोक्ष्ये नापि पास्यामि" यस्यासीदाश्रवो दृढः ॥

दम्पत्योस्तापदानार्तो रविरन्तर्दधे ततः ।
तारकोत्सुकसन्तुष्ट्यै तारकेशोऽप्युदाययौ ॥ ४६ ॥

अतिथ्यलाभशोकार्तः पतितो रामसन्निधौ ।
तद्भक्तिपारवश्येन स्वापमाप क्षणेन सः ॥ ४७ ॥

तत्स्वप्ने ददृशे भिक्षुर्दृष्टपूर्वो हसन्मुखः ।
उवाचैनं समुत्थाप्याश्वासयन् यतिशेखरः ॥ ४८ ॥

"अहमस्मि त्वया दृष्टः सन्यासी धन्यजीवनः ।
नारदाख्यः प्रहृष्टोऽस्मि तव भक्तिभरैः शुभैः ॥ ४९ ॥

मया योऽदायि ते ग्रन्थः स स्वरार्णवनामकः ।
सुरेषु सुकृतोद्रिक्तविबुधैकसुबोधनः ॥ ५० ॥

आमूलाग्रं सदाभ्यस्येस्तं ग्रन्थं ज्ञानवानपि ।
येनात्र स्वरविज्ञानात् स्वरवाप्तिरदुःशका ॥ ५१ ॥

इत्यादिश्य दयासिन्धौ ब्रह्मपुत्रे तिरोहिते ।
श्रीरामब्रह्मपुत्रोऽयं प्रबुध्यैनमवन्दत ॥ ५२ ॥

क्षणात् तद्दत्तमुद्ग्रन्थं तं विलोक्य स्वरार्णवम् ।
अवन्ध्यफलकं स्वप्नं तममन्यत सादरम् ॥ ५३ ॥

श्रीरामकरुणां भूयो नारदानुग्रहं तथा ।
लब्ध्वायं मुग्धदुःसाधं कृतिनं स्वममन्यत ॥ ५४ ॥

अथ स्वरार्णवस्यास्य साहाय्येन स सात्त्विकः ।
तं स्वरार्णवमालोड्य तत्पारं चाश्वतीतरत् ॥ ५५ ॥

तदनु ज्ञानसम्पन्नस्तदनुग्रहसंग्रहात् ।
बहुभिः कृतिभी रामं तुष्टपूर्वमतोषयत् ॥ ५६ ॥

तदा तदा कृता एताः कृतिनोऽस्य शुभाः कृतीः ।
ततस्ततः समायाताः समगृह्णन् समे बुधाः ॥ ५७ ॥

प्रत्यहं प्रातरुत्थाय स्नातः पूतमना हरिम् ।
तम्बुरुश्रुतिपात्रस्थैर्हरिभक्तिसुगन्धिभिः ॥ ५८ ॥

बहुरागगुणप्रोतैः कृतिपुष्पैः समार्चयत् ।
पत्रं पुष्पं फलं क्षीरं सर्वं भक्त्या समार्जितम् ॥ ५९ ॥

परिवारवृतायाऽस्मै राघवाय न्यवेदयत् ।
एलाक्रमुकजाजीभिः सुगन्धिसितचूर्णितैः ॥ ६० ॥

जानकीकरसंमृष्टैस्ताम्बूलैस्तमनन्दयत् ।
उपचारेषु सर्वेषु दिवा दोषा च पूजने ॥ ६१ ॥

बहुशः स्वकृतीर्गायन् तुष्टावेशं महाकविः ।
ब्राह्मे मुहूर्त उत्थाय स्नातेन कृतिनाऽमुना ॥ ६२ ॥

श्रीरामभक्तशेषश्च ताम्बूलोच्छिष्टमेव च ।
अतिपूतमपुण्यानां दुरापं प्रापि चान्वहम् ॥ ६३ ॥

उपोषितः सपत्नीकः सर्वत्र हरिवासरे ।
द्वादश्यां ब्राह्मणैः साकं पारणां च मुदाऽतनोत् ॥ ६४ ॥

बृन्दावनमहापुण्यद्वादश्यां प्रियया सह ।
देवीं तां तुलसीं गेहे कीर्तनैरप्यपूजयत् ॥ ६५ ॥

पश्चापगेशदेवस्य 'सप्तस्थान'महोत्सवे ।
स्वशिष्यैः सहितो भक्तैर्भजन् क्षेत्राटनं व्यधात् ॥ ६६ ॥

निमेषमेकमप्येष निष्फलं जात्वयापयन् ।
अवस्थास्वपि सर्वासु राममेव सदाभजत् ॥ ६७ ॥

इति स विज्ञगणेडितपाटवो
हरिपदाम्बुजसेवनलालसः ।
सकललोकमनोहरचर्यया
भुवि ललास कलासदनात्मकः ॥ ६८ ॥

इति 'गायकशिखामणि'—हरिकेशनल्लूर्—मुत्तय्य—
भागवतविरचिते श्रीमत्त्यागराजविजये
पञ्चमः सर्गः.

अथ षष्ठः सर्गः ।

दैवतं देवतानां यः सम्पदां सम्पदुत्तमा ।
तमेव राघवं भक्त्या ध्यायतः स्तुवतः सदा ॥ १ ॥

तस्य गायकराजस्य त्यागराजस्य धीमतः ।
अमला ह्यतुला कीर्तिस्त्रिलोकीमत्यरिच्यत ॥ २ ॥

कलाभिरकलङ्काभिः सत्पथेऽस्मिन् विराजति ।
त्यागराजे महाराजचकोरास्तृप्तिमाययुः ॥ ३ ॥

तञ्जापुरनराधीशः शरभोजिमहीपतिः ।
एतस्य गीतिमाधुर्यात् प्राप तुष्टिं तथाविधाम् ॥ ४ ॥

यथाशु त्यागराजं त निजास्थानविभूषणम् ।
विधायैच्छद् गीतमात्मस्तावकं तन्मुखात्तु सः ॥ ५ ॥

तदर्थं भृत्यवर्गेशं त्यागराजप्रियं द्विजम् ।
संप्रेष्य त्यागराजं तं समानेतुं तदादिशत् ॥ ६ ॥

स तु विप्रो विरक्तेऽस्मिन् त्यागराज तथाविधाम् ।
राजाज्ञां वक्तुकामः सन् चिरं कालमयापयत् ॥ ७ ॥

कदाचित् स्वयमेवायं यदा तं धरणीपतिम् ।
प्रशशंस तदैवास्य चिच्छेदाशयमस्पृहः ॥ ८ ॥

'चूत त्यक्त्वा यथा भृङ्गो नैव वाञ्छति निम्बकम् ।
सन्तापेऽप्यातपादेव विकसत्यम्बुजं यथा ॥ ९ ॥

तथैव भगवद्भक्तः पक्वचित्तो गतस्पृहः ;
दीनोऽपि गुणहीनं तु नाश्रयेत महाधनम् ॥ १० ॥

रामसन्निधितोऽन्यो मे निधिर्जातु न रोचते' ।
इत्युपन्यस्य तस्याशां खण्डयामास पण्डितः ॥ ११ ॥

मन्दमन्दं हताशोऽसौ विप्रः प्राप्य नरेश्वरम् ।
रामैकचरणासक्तिं त्यागराजस्य चावदत् ॥ १२ ॥

तदाकर्ण्य महाकोपपैशाचाविष्टमानसः ।
मूढः स त्यागराजं तं बलादानेतुमाग्रहात् ॥ १३ ॥

व्ययीकृत्य धनं भूरि भटान् धीरान् समादिशत् ।
येषां साहसधैर्याद्या गुणा अन्यत्र रेजिरे ॥ १४ ॥

ते भटास्त्यागराजस्य भवनं परितः स्थिताः ।
श्रीरामभजनं श्रुत्वा त्वन्वगायन् वशंगताः ॥ १५ ॥

ताद्दक्षमहिमोपेतं बलाद् दुर्ग्रहमस्पृहम् ।
अवेत्य खण्डिताशास्ते तच्छिष्या न ततो ययुः ॥ १६ ॥

एतावदन्तरे मूर्खः शरभोजिमहीपतिः ।
सर्वभेषजदुर्वारां शूलां प्राप्य निजोदरे ॥ १७ ॥

विव्यथे त्यागराजस्य पीडनोत्थमहाफलम् ।
तदेतत् तत्कृपालेशमात्रशक्यनिवारणम् ॥ १८ ॥

भिषजा मान्त्रिकेणापि कथं नाम निवार्यते ।
परिबभ्राम राजायं वह्निपातितकीटवत् ॥ १९ ॥

त्यागराजप्रभावज्ञः कश्चिद् विज्ञस्ततोऽवदत् ।
त्यागराजस्य रामैकनित्यभक्तस्य धीमतः ॥ २० ॥

पीडनेनैव भो राजन् दुःस्थितिस्तेऽजनीदृशी ।
शरणीकरणीयोऽतः स एव महिमोज्ज्वलः ॥ २१ ॥

दयालुः सोऽपराधं ते नूनं क्षाम्यति सात्त्विकः ।
इति श्रुत्वा क्षणेनासौ प्राणाशाबन्धुरान्तरः ॥ २२ ॥

त्यागराजान्तिकं गन्तुं निश्चिकाय कथञ्चन ।
ततः पूर्वं तु सा शूला महाव्याधिस्तिरोदधे ॥ २३ ॥

एतेन त्यागराजस्य महिमानं वितर्क्य सः ।
उत्प्लुत्य त्यागराजस्य पदाम्भोजयुगेऽपतत् ॥ २४ ॥

स्वापराधमिमं क्षन्तुं प्रार्थ्य भूयो ननाम च ।
अगाधमहिमोपेतं क्षुद्रार्थत्यागिनं बुधम् ॥ २५ ॥

कथं स धनमात्राढ्यस्तर्पयेद्भक्तमन्तरा ।
अतः पुनः पुनस्त्वेनं प्रणम्यैतत्कृताः कृतीः ॥ २६ ॥

स्वयं च भक्तितो गायन् त्यागराजप्रियोऽभवत् ।
श्रेयांसि राजदत्तानि त्यागराजे त्यजत्यलम् ॥ २७ ॥

जप्येशो द्रव्यमात्रार्थी शशापैनं निजानुजम् ।
'दुर्लभो राजसम्मानः साधारणजनैः परैः ॥ २८ ॥

अनायासेन तत्प्राप्याप्येष हन्त त्यजत्यहो ।
असंगृह्य धनं लब्धं भक्ताभामान् परःशतान् ॥ २९ ॥

प्रत्यहं भोजयन्नेष द्रविणं मे विनाशयेत् ।
एतेन नार्ज्यते किञ्चिद् दीयते तु मदर्जितम् ॥ ३० ॥

दुःश्रावस्त्वारवः सर्वान् गेहे बधिरयत्यसौ ।
नैवंविधैर्वृथा दानैर्नाप्युच्चैः क्रोशनैः क्वचित् ॥ ३१ ॥

प्रीयते भगवान् किन्तु वश्यो मानसिकादरात् ।
तावद्धि दुःसहः सोऽयं सम्भ्रमो भविता गृहे ॥ ३२ ॥

यावदस्यार्चनामूर्ती रामो दूरान्न हार्यते ।
अतोऽह प्रतिमाः सर्वा एतत्प्राणसमा इमाः ॥ ३३ ॥

प्रक्षेप्स्यामि रहो दूरे कथञ्चित् सौख्यलब्धये ।
इति निश्चित्य स ज्येष्ठस्तमोगुणविजृम्भितः ॥ ३४ ॥

तमिस्रायां तु सर्वेषु सुप्तेषु भुवि जन्तुषु ।
श्रीरामविग्रहं चारुं चौर्येणोद्धृत्य सत्वरम् ॥ ३५ ॥

ग्रामाद् दूरतरं गत्वा कावेरीतीरमास्थितः ।
अदयः सभयो रामं प्रवाहे तीररोधिनि ॥ ३६ ॥

प्रचिक्षेप नदीमध्ये रत्नराशिं कपिर्यथा ।
पाषण्डस्तु यथाम्नायं पुरोडाशं यथा वृकः ॥ ३७ ॥

गाङ्गं तोयं यथा च श्वा तथैवायमिमं विदन् ।
सन्निधौ त्यागराजस्य गानामृतरसोत्सवः ॥ ३८ ॥

वियोगेऽप्यस्य दुःखोत्थामियेष कवितां हरिः ।
कवेरतनयास्वादुक्षीरपूराभिलाषुकः ॥ ३९ ॥

मत्स्यकूर्मादिभी रम्यैर्जन्तुभिर्विहरंस्तथा ।
क्षीराब्धिशयनः श्रीमान् पयोधाविव राघवः ॥ ४० ॥

अत्राप्युद्रिक्तसौख्येन प्रभुर्हागनमाचमन् ।
रामेण सकलज्ञेन करुणाम्बुधिना तदा ॥ ४१ ॥

शिलेव निष्प्रभावेण चिरं तस्थे महात्मना ।
विश्वोत्पत्तिस्थितिध्वंसा यदीयेच्छाविजृम्भितम् ॥ ४२ ॥

तादृशं नाशितं मत्वा स मूर्खो मुमुदे परम् ।
निशीथे स्वं गृहं प्राप्य यथापूर्वममो खलः ॥ ४३ ॥

अदोष इव निद्रालुः स्वात्मानं प्रशशंस च ।
अथ दुःस्वप्नमग्नात्मा रामहानिं वितर्कयन् ॥ ४४ ॥

स्नात्वाशु मन्दिरे रामं सोत्कण्ठं द्रष्टुमागमत् ।
तदनीं राघवो हन्त तदक्ष्णोः पद्मनोरपि ॥ ४५ ॥

विषयो नाभवच्चित्ते प्रतिबिम्बितविग्रहः ।
सर्वं सद्म समां वीथीं विमृग्यापि हतात्मना ॥ ४६ ॥

त्यागराजेन तेनापे दुःखमात्रं सुदुःसहम् ।
वापीकूपतटाकेषु सर्वत्रान्विष्य सादरम् ॥ ४७ ॥

श्रीरामविरहोत्तप्तो बुभुजे न पपौ न च ।
न स्वापे नापि चैकत्र स्थितौ तस्य मनोऽभवत् ॥

यद्यद् ददर्श तत् सर्वं रामभ्रान्त्या तमार्दयत् ।
जातु जप्येशदाराणां मुखोत्थान्निजदूषणात् ॥ ४९ ॥

विवेद सरिदि क्षिप्तं मत्सरादग्रजन्मना ।
पूर्णप्रवाहिनीं देवीं कावेरीमवरुह्य सः ॥ ५० ॥

त्यक्तदेहाभिलाषोऽयं रामसन्विष्य दुःखितः ।
अन्विष्यान्विष्य लोष्टादीन् निःसारार्थान् परं व्रजन् ॥

पूर्ण नदीप्रवाह तं स्वाश्रुपूरैरवर्धयत् ।
एकस्मिन् वत्सरे क्षिप्ते कथञ्चिद् दुःखिनामुना ॥ ५२ ॥

कावेरीपूर उत्पारो हरिमानस आविशत् ।
सिकताप्रचुरे जाते नदीमध्ये मनोहरे ॥ ५३ ॥

जानुदघ्ने जले रामो बहिर्गन्तुं मनो दधे ।
तद्रात्रौ त्यागराजस्य स्वप्ने रामः कृपानिधिः ॥ ५४ ॥

निगूढं निजवास्तव्यं सिकतान्तर्न्यवेदयत् ।
क्षणेन प्राप्तवद्रामं परमानन्दतुन्दिलः ॥ ५५ ॥

प्रातस्तं देशमुत्प्लुत्य नदीमध्यमवातरत् ।
रामप्रोक्ते स्थले खात्वा सिकता अपसार्य सः ॥ ५६ ॥

राघवं चिरनष्टं तं चिरं दृष्टिपुटैः पपौ ।
एतस्य त्यागराजस्य तथाभूतो मुदां भरः ॥ ५७ ॥

अनिवारप्रसारोऽभूद् बहिर्गानच्छलाद् बलात् ।
बहूनि कीर्तनान्येष गात्वा तुष्टाव राघवम् ॥ ५८ ॥

अथ तं गेहमानीय महाप्रेम्णाऽभ्यपूजयत् ।
जप्येशेन विनैकेन सर्वे रामप्रिया जनाः ॥ ५९ ॥

रामोपलब्धिसन्तुष्टास्त्यागराजं तमस्तुवन् ।
स मूर्खः शोकभीती तु युगपत् प्राप्य विव्यथे ॥ ६० ॥

उदिते भास्करेऽप्येति किं मुदं कुमुदावलिः ।
पूर्वाधिकेन स प्रेम्णा नष्टलब्धं रमापतिम् ॥ ६१ ॥

पूजयन् त्यागराजोऽभाद् रामसेवाहतात्ययः ।
अथ वञ्चिमहीपालः स्वातिनक्षत्रसम्भवः ॥ ६२ ॥

एतस्य गाननैपुण्यं शुश्राव श्रुतपुङ्गवः ।
त्यागराजस्य शिष्येभ्यस्तत्कृतिस्वादिमोद्धुरम् ॥ ६३ ॥

विज्ञाय विज्ञवर्योऽयं निममज्ज मुदम्बुधौ ।
आढ्यं तृणाय मन्वानं राममात्रशरण्यकम् ॥ ६४ ॥

तमाकर्ण्य विरक्ताग्र्यं स्वातिभूपोऽभ्यनन्दयत् ।
विविधासु च भाषासु रागेषु विविधेषु च ॥ ६५ ॥

स्वकृताश्च कृतीरस्मै प्रैषयद् गानवेदिने ।
तदास्थानमहाविद्वान् सङ्गीताम्बुधिपारगः ॥ ६६ ॥

श्रीपद्मनाभभक्तो यः शान्तचेता नृपेरितः ।
'षट्कालगायि गोविन्दमारार्' नामास्य सन्निधौ ॥ ६७ ॥

स्वातिराजकृतीः काश्चिदगायत् सादरं तदा ।
ताः कृतीः पद्मनाभैकस्तोत्रसक्तलसत्पदाः ॥ ६८ ॥

शृङ्गारादिरसोद्रिक्ताः प्राच्यलक्ष्मानुवर्तिनीः ।
रामकृष्णावतारादिमाहात्म्यप्रतिपादिनीः ॥ ६९ ॥

सेवामृगमदामोदिकला तिलकलाम्मिनीः ।
स्वरसाहित्यसन्दर्भगभीरकलमेळिकाः ॥ ७० ॥

पद्मनाभपदेनैव मुद्रिता बहुसङ्गतीः ।
गैर्वाणीप्रचुराः श्रुत्वा त्यागराजो ह्यमत्सरः ॥ ७१ ॥

अभिनन्द्य परं तस्य वैदुष्यं सर्वतोमुखम् ।
पत्रमप्येकमालिख्य प्राहिणोद् भूभुजे मुदा ॥ ७२ ॥

अद्यापि पत्रिका सास्ति कोशे वञ्चीशितुः प्रभोः ।
लसन्ति त्यागराजेति यत्र नामाक्षराण्यपि ॥ ७३ ॥

स गोविन्दाभिधो विद्वान् गाने नैजां च नैपुणीम् ।
प्रदर्श्य तत्पदे नत्वा लब्ध्वा सार्थास्तदाशिषः ॥ ७४ ॥

तत्पत्रं स्वातिभूपेन्द्रे समर्प्य प्रशशंस तम् ।
तञ्जापुरनृपाह्वानं तिरस्कृत्य विरक्तितः ॥ ७५ ॥

विराजन्तमिमं राज्ये नैजे विन्देत् कथं नृपः ।
तादृशं तस्य वैराग्यं विज्ञायायं महीपतिः ॥ ७६ ॥

मन्दभाग्यं बतात्मानं स्वराज्यं चाप्यमन्यत ।
अथ गोविन्दमारार् सः पण्डरीपुरमीयिवान् ॥ ७७ ॥

यत्रामुं त्यागराजं स्वैः कीर्तनैरप्यवर्णयत् ।
कदाचिद् द्विजवर्योऽगात् पूताद् वाराणसीपुरात् ॥

रामदासाभिधः सिन्धौ सेतुदर्शनदीक्षितः ।
चोलदेशं यदायासीत् तत्स्वप्नेऽपि तदा हरः ॥ ७९ ॥

उपेत्य त्यागराजं तं द्रष्टुमेनमुपादिशत् ।
सोऽप्यागत्य हरादेशाद् रामदासो जितेन्द्रियः ॥ ८० ॥

रामदासमिमं नत्वा कृतकृत्योऽजनि क्षणात् ।
अथ जातु निजे गेहे स्वभार्यासविधे पराम् ॥ ८१ ॥

सुस्वरं वादिनीं काञ्चिन्निशम्य स यदृच्छया ।
सपद्युपेत्य नाद्राक्षीत् कामप्यन्यां प्रियां विना ॥ ८२ ॥

बुबोध तां प्रियावाचा धर्मसंवर्धनीं शिवाम् ।
अथ तां दयितासख्यात् स्वयं गेहमुपागताम् ॥ ८३ ॥

इत्युत्तमासक्तविज्ञानिभूपै-
र्यत्याश्रमख्यातसत्याध्वदीक्षैः ।
स त्यागराजोऽयमत्यादरेण
प्रत्यागतैर्नित्यमत्यादृतोऽभात् ॥ ८४ ॥

इति 'गायकशिखामणि'--हरिकेशनल्लूर्--मुत्तय्य--
भागवतविरचिते श्रीमत्त्यागराजविजये
षष्ठः सर्गः ।

अथ सप्तमः सर्गः ।

निषादरसिकं भोगे विषादहरणं सताम् ।
तुषाररुचिवक्त्रोऽसौ बुभूष कृतिभूषणैः ॥ १ ॥

सङ्गीतमन्दवातोत्थसन्ततानन्दसौरभे ।
रामजीवनतद्ध्यानस्तवनोक्तिमहावने ॥ २ ॥

कवने भुवनेऽनीहस्तस्थिवान् स तपोधनः ।
त्यागराजस्तृतीयेऽभात् वानप्रस्थाश्रमेऽपि सः ॥ ३ ॥

इति पञ्चाशतं सार्धान् वत्सरान् परियाप्य सः ।
पुण्यक्षेत्राटनं कर्तुं प्रतस्थे शिष्यसेवितः ॥ ४ ॥

आदौ कलिमलध्वंसिशेषाचलविलासिनम् ।
श्रीनिवासं दृशा द्रष्टुं वेङ्कटाद्रिंयियासया ॥ ५ ॥

आरुह्य शिबिकामूढां तत्र भक्तैर्गुणोज्ज्वलैः ।
गोविन्दराजराजन्तीं पुरीं तां स उपेयिवान् ॥ ६ ॥

ततः पदैव सप्ताद्रीनारुह्याप्तजनैः सह ।
सोत्कण्ठं वेङ्कटेशस्य दर्शनार्थं यदागमत् ॥ ७ ॥

तदा देवालयद्वारे निवेद्यसमयोचिता ।
बद्धा तिरस्करिण्यासीद् दर्शनप्रतिबन्धिका ॥ ८ ॥

मायामिव महाज्ञानी ब्रह्मज्ञाननिरोधिनीम् ।
तामप्याच्छादिनीं धीरो भक्तिवज्रैर्व्यदारयत् ॥ ९ ॥

एतद्वदनचन्द्रोत्था गावस्तापनिवारिणीः ।
द्विविधं च तमो भित्त्वा वेङ्कटेशमभासयन् ॥ १० ॥

ऊर्ध्वपुण्ड्रलसत्फालं सितकर्पूरितेक्षणम् ।
सालग्रामशिलामालामणिराजीविराजितम् ॥ ११ ॥

सुमनोहारिसौन्दर्यं सुमनोहारिविग्रहम्
आजानुबाहुमब्जाक्षमभयप्रदहस्तकम् ॥ १२ ॥

नीलमेघनिभाकारं श्रीवक्षस्कं जगत्पतिम् ।
चक्षुःपुटेन भूयोऽसौ निपीय निरुपद्रवम् ॥ १३ ॥

स्वादुभिः कीर्तनैः कैश्चित् तुष्टावेष्टप्रदं हरिम् ।
बहुमेने ततोऽभिज्ञैस्तत्प्रभाववशङ्कितैः ॥ १४ ॥

अथ लक्ष्मीं महादेवीं दिव्ये पद्मसरोवरे ।
अभिवन्द्य सदारोऽयं गोग्रामं च ततो व्रजन् ॥ १५ ॥

मध्येमार्गमसौ सौम्यः शुश्रावाक्रन्दनं स्त्रियाः ।
यस्याः साध्व्याः प्रियो भर्ता कूपपातान्मृतोऽभवत् ॥

आक्रन्दन्तीं निजैर्बालैः पतिमात्रगतिं तदा ।
ब्राह्मणीं त्रातुकामोऽभूद् रामचन्द्रदयाबलात् ॥ १७॥

अतोऽसौ कीर्तनं किञ्चित् करुणैकरसोज्ज्वलम् ।
प्रारेभे यावता विप्रो मृतः सुप्तोत्थितोऽभवत् ॥ १८ ॥

एतेन द्विगुणीभूतप्रभावोऽयमथागमत् ।
गोग्रामं सुन्दरेशाख्यः शूद्रः कश्चिन्महास्तिकः ॥

त्यागराजप्रभावज्ञः प्रत्युद्गम्य तमुत्तमम् ।
सप्तरात्रं निजे गेहे ह्यवस्थाप्य सशिष्यकम् ॥ २० ॥

अन्नवस्त्रादि शिष्येभ्यो वितरन्नतरद्भवम् ।
त्यागराजं तु भक्त्येकतुष्टं तुष्टाव केवलम् ॥ २१ ॥

तत्रत्यस्य हरस्याथो स्तावकं कीर्तनं शुभम् ।
तन्मुखात् प्राप्य सन्तुष्टो मेने स्वं कृतकृत्यकम् ॥ २२ ॥

अथास्मिन् निःस्पृहे विप्रे त्यागराजे धनद्विषि ।
अज्ञापयन् धनग्रन्थिं समर्पयितुमुत्सुकः ॥ २३ ॥

शिविकायां रहस्तस्यासनस्याधो महद् धनम् ।
निधाय प्रेषयन् भक्त्या गुरुमेनं मुहुर्नमन् ॥ २४ ॥

शिष्यास्तज्ज्ञानिनोऽप्येतन्नावदन् स्वगुरुं भयात् ।
अथ स त्यागराजस्तु प्रतस्थे निजपत्तनम् ॥ २५ ॥

मध्येमार्गं निशीथेऽथो केचिच्चोराः कृतारवाः ।
निवार्यैतान् धनं सर्वं हर्तुकामास्तमार्दयन् ॥ २६ ॥

शिष्येषु भीतभीतेषु त्यागराजः स्थिरान्तरः ।
अकुतोभय एवासीद् विरक्तस्य कुतो भयम्? ॥ २७ ॥

स्वभक्तपरतन्त्रो हि रामचन्द्रः सहानुजः ।
तं ररक्ष जगद्रक्षादीक्षितो राक्षसन्तपः ॥ २८ ॥

कोदण्डमण्डितोद्बाहुं रामं सौमित्रिसंयुतम् ।
भयानकं द्विषां दृष्ट्वा त्यागराजाभिरक्षकम् ॥ २९ ॥

सद्गुरोरस्य पादाब्जे प्रणम्यैतेऽथ तस्कराः ।
पप्रच्छुस्तौ महावीरौ धनुष्मन्तौ तु काविति ॥ ३० ॥

अज्ञाततत्कथौ विज्ञप्त्यागराजः स्वरक्षकौ ।
राम रामानुजौ ज्ञात्वा कीर्तनैस्तत्कृपां स्तुवन् ॥ ३१ ॥

चोरांस्तान् बाधयामास कृतार्थान् रामदर्शनात् ।
येन तास्कर्यमुज्झित्वा ते तच्छिष्यतयाव्रजन् ॥ ३२ ॥

श्रीरङ्गक्षेत्रमागत्य शेषभोगाधिशायिनम्
विभीषणसमभ्यर्च्य रङ्गनाथं ददर्श सः ॥ ३३ ॥

स्तुत्वैनं कीर्तनै रम्यैर्जम्बुलिङ्गेश्वरं तथा ।
अखिलाण्डेश्वरीं देवीमस्तावीत् सुरसंस्तुताम् ॥ ३४ ॥

अथ मध्यार्जुनक्षेत्रे महालिङ्गेश्वरं शिवम् ।
अभिवन्द्य ततोऽयासीद् गोविन्दपुरमुत्तमम् ॥ ३५ ॥

ब्रह्मभूयं गतान् तत्र बोधेन्द्रगुरुपुङ्गवान् ।
आराध्य वेङ्कटेशार्यानुपचर्य च कीर्तनैः ॥ ३६ ॥

स्तुत्वाऽथ भार्यया साकं नागपत्तनमीयिवान् ।
तत्र 'नीलायताक्षीशं' 'कायारोहशिवं' नमन् ॥ ३७ ॥

तुष्टाव कीर्तनैः कैश्चिन्मधुरैर्भक्तिपूरितैः ।
अथ पञ्चनदं प्राप प्रणतार्तिहरप्रियम् ॥ ३८ ॥

निजैर्वेङ्कटरामाख्यैर्गुरुभिः सह स द्विजः ।
कदाचिन्नवमालाख्यं पुरं प्राप महाकविः ॥ ३९ ॥

सङ्गीतलक्ष्मतत्त्वेषु परीक्षा या ह्यवर्तत
तत्रानेकेषु विद्वत्सु निर्जितेषु महीक्षिता ॥ ४० ॥

गुर्वादेशादय धीरः सङ्गं आरुह्य दुर्जयम् ।
ज्योतिःस्वरूपिणीं नाम्ना रागं कश्चिदतिस्फुटम् ॥ ४१ ॥

आललाप कलावार्धिस्तथा कोलाहलेन सः ।
यथा तत्रत्यदीपस्था निरग्निरपि वर्तिका ॥ ४२ ॥

तद्रागगानमाहात्म्याज्ज्वालामालाभिरज्वलत् ।
तदालोक्य महाराजः सर्वे च विजिता बुधाः ॥ ४३ ॥

तमेनं मर्त्यरूपेण भुवि जातं कलार्णवम् ।
गन्धर्वनायकं विज्ञं निश्चिक्युरतिनारदम् ॥ ४४ ॥

अथास्य दयिता साध्वी पूतवाक्कायमानसा ।
सहसा शिवपादाब्जं भेजे सुकृतिसुग्रहम् ॥ ४५ ॥

तद्वियोगेन सन्तप्तः कृष्णमेव हृदा दधत् ।
"नौकाचरित"मुत्कृष्टं "प्रह्लादविजयं" तथा ॥ ४६ ॥

विरचय्यातुलौ ग्रन्थौ सङ्गीतमधुपूरितौ ।
चरितार्थां निजां चक्रे रसनां रसिकाग्रणीः ॥ ४७ ॥

अथ भूवासतः श्रान्तमेकान्तसुखकामुकम् ।
तं स्वपादाब्जमानेतुं रामः काममधीधरत् ॥ ४८ ॥

ततोऽस्य स्वप्न आगत्य त्यागराजं मुदाऽब्रवीत् ।
'अलं ते भूमिवासेन त्यागराज महातपः ॥ ४९ ॥

इतस्तु दशमे मासि यासि वासं मदन्तिके ।
अथापि जन्म ते त्वन्यद् दुर्वारं भुवि शिष्यते ॥ ५० ॥

मत्पदं पापिदुष्प्रापं तद्विनाश्य समेष्यसि' ।
इत्युक्त्वा भगवान् रामः क्षणेनान्तर्दधे प्रभुः ॥ ५१ ॥

त्यागराजस्तमत्याप्तं स्तुवन् भक्त्या स्वकीर्तनैः ।
युगकल्पानिमान् मासान् गापयामास तापसः ॥ ५२ ॥

अचिराद् रामपादाब्जसन्निधानं यियासुना ।
तेनाशु कृतयो रम्या भूयस्योऽथ वितेनिरे ॥ ५३ ॥

विषयेष्वस्य वैराग्यं रामे भक्तिर्गरीयसी ।
भक्तेषु चादरो भूयान् ववृधे जरसा सह ॥ ५४ ॥

दशस्वेव दिनेष्वस्य शिष्टेषु तनुधारिणः ।
जन्मान्तरविनाशाय परिव्राज धर्मदृक्  ॥ ५५ ॥

चतुर्थे त्वाश्रमेऽमुष्मिन् विधिवद् गुरुराजतः ।
गृहीते विहितान् धर्मान् सद्गुरुः स समाचरत् ॥ ५६ ॥

अदयो दशमो हन्त वासरो जनतापकः ।
सोऽप्यागादन्तिके हन्त त्यागराजैकमोदकः  ॥ ५७ ॥

अष्टाशीतितमे निजे समाप्ते वयसि क्षितौ ।
वसुसागररत्नाब्धौ (४९४८) कलौ संवत्सरे गते ॥ ५८ ॥

पराभवाभिधे वर्षे पुष्यमासे हिमाश्रये ।
कृष्णपक्षे च पञ्चम्यामतितेजोलसन्मुखः  ॥ ५९ ॥

धरात्यागं विनिश्चित्य सर्वज्ञः स यतीश्वरः ।
शिष्यानाहूय तान् श्रेष्ठान् साम्ना धर्मानुपादिशत् ॥

"इयं गीतकला दैवी सर्वजन्तुमनोहरा ।
आधिव्याध्यपहन्त्री नः सादरं परिरक्ष्यताम्  ॥ ६१ ॥

सामवेदसमुत्थेयं गीतिर्वेदान्न हीयते ।
गन्धर्ववेद इत्येनां यदाहुर्वैदिका अपि  ॥ ६२ ॥

कृते यत् तपसा प्राप्त त्रेतायां यजनादिभिः ।
द्वापरे यच्च पूजाभिस्तत्सर्वं कीर्तनात् कलौ ॥ ६३ ॥

न तथा प्रीयते वेदैः नापि शास्त्रैर्न पूजनैः ।
यथा तु भक्तितो गीतैः सुस्वरैः कीर्तनैर्हरिः ॥ ६४ ॥

सत्सङ्गीतकला सेयं गुर्वनुग्रहसुग्रहा ।
परस्य ब्रह्मणः प्रीत्यै सुधीभिर्विनियुज्यताम् ॥ ६५ ॥

भक्तिशून्येषु मत्तेषु देहयात्रैकलब्धये ।
न मेऽमूः कृतयः पूताः कीर्तनीयाः कदाचन ॥ ६६ ॥

न केवलेषु रागेषु न तालेषु लयेषु वा ।
आसक्ता भवतामूषां भावं चात्र विचिन्वत ॥ ६७ ॥

अभावं कीर्तिता गीतिरभावायैव कल्पते ।
मदभ्यसूयवे नैव रोचन्ते कृतयो मम ॥ ६८ ॥

अपसार्य तु मात्सर्यं विचार्य सकलाः कलाः ।
आचार्यवर्यतां प्राप्य विराजध्वं हरिप्रियाः ॥ ६९ ॥

मयार्चितमिमं देवं रामचन्द्रं सदिष्टदम् ।
अभ्यर्च्य यूयमप्याशु भवबन्धं विमुञ्चत" ॥ ७० ॥

इत्यादिशं जनस्यान्ते रामचन्द्रं निजे कुले ।
त्रिलोक्यां विमलां कीर्तिं निजां मूर्तिं च भूतले ॥

अश्रुधारां सुहृन्नेत्रे दुःखपूरं सुताहृदि ।
गायिलोके कृतीर्निजा राघवांघ्रौ स्थिरं मनः ॥ ७२ ॥

विन्यस्य हन्त सन्यासिप्रवरो धन्यजीवनः ।
रामरामेति मन्त्रोक्त्या विरराम धरातलात् ॥ ७३ ॥

तदैव तच्छिरोमध्याद् ब्रह्मभावोपपादिना ।
दैवेन ज्योतिषा केनाप्युदाजग्मेऽक्षिहारिणा ॥ ७४ ॥

पश्यता पुरतो ज्योतिस्तत्कपालात् समुत्थितम् ।
क्षणेन दिवमुद्भिद्य व्यानशे सकलं नभः ॥ ७५ ॥

समाधिसंस्थितस्यास्य स्वामिनो ज्योतिरात्मन ।
ब्रह्मभूयं गतस्यासीद् वपुर्मात्रं जनेक्षितम् ॥ ७६ ॥

स्मृतिमात्रपथं यातं यतिं दुःखेन दर्शिनः ।
शून्यमेव जगत् सर्वं समैक्षन्त विनामुना ॥ ७७ ॥

तदा देशान्तरायातैः सह तच्छिष्यपुङ्गवाः ।
ग्रामात् प्राच्यां शुचौ देशे कावेर्यम्बुपवित्रिते ॥ ७८ ॥

तां तनुं गाङ्गपाथोभिरभिषिक्तां महोत्सवम् ।
गन्धमाल्यादिभिर्भद्रैरलङ्कृत्य विजृम्भणैः ॥ ७९ ॥

सवाद्यगीत साम्नायं सतत्कीर्तनमालिकम् ।
भूसुरा वसुधागर्भे ससुरा ब्रह्मरूपिणम् ॥ ८० ॥

योजयामासुरीशानं यतीनां हतपाप्मनाम् ।
इदं रत्नमवाप्यासीद् रत्नगर्भा वसुन्धरा ॥ ८१ ॥

अथ तं देशमुत्कृष्टमतिपूतमघापहम् ।
परितस्त्वरितं रम्यं मन्दिरं निर्ममे जनैः ८२ ॥

तुलसीविलसच्छीर्षं समाधिं व्याधिवारकम् ।
असितग्रावभिर्धन्या बबन्धुरतिसुन्दरम् ॥ ८३ ॥

आराधना गुरोश्चक्रे दशरात्रं महाजनैः ।
यथेष्टं भोजिताः सर्वे जन्तवो यत्र सङ्गताः ॥ ८४ ॥

सर्वाश्च कृतयोऽमुष्य कृतिनः सुकृतार्णवैः ।
तच्छिष्यैः सरसं गीताः श्रवोभुक्तिं च सन्दधुः ॥ ८५ ॥

अथास्मिन्नुत्सवे दिव्ये दशमेऽन्तिमवासरे ।
त्यागराजगुरोर्मूर्तिरालेख्यात्मा स्वलङ्कृता ॥ ८६

नगरं समयानीता वाद्यघोषविजृम्भणैः
सर्वान् भक्तान् समायातानन्वगृह्णात्प्रसादनैः ॥ ८७ ॥

तादृग्यागधनाद्यापि दशरात्रं प्रवर्तते ।
यत्र गायकमूर्धन्याः प्राप्ताः क्षेत्रमिदं महत् ॥ ८८ ॥

विनीय शक्तितो द्रव्यं गायन्त्येतत्कृतीर्मुदा ।
अधिकेन किमुक्तेन देवदेवोत्सवो हि सः ॥ ८९ ॥

प्रत्यहं पूज्यते तस्य समाधिः पापनाशकः ।
तुलसीवनमध्यस्थः सर्वाभीष्टफलप्रदः ॥ ९० ॥

एतद्दौहित्रसन्ताने संजातश्चारुगायकः ।
अमुं पूजयति श्रीमान् त्यागब्रह्माभिधं गुरुम् ॥ ९१ ॥

समाधिं परितस्त्वद्य मन्दिरं सुन्दरं महत् ।
तद्भक्तप्रवरैराढ्यैर्निर्मितं सह्यजातटे ॥ ९२ ॥

स्नानपानोचितै रम्यैः सोपानैरुपशोभितम् ।
विराजते यथा गाङ्गे तीरे वाराणसी पुरी ॥ ९३ ॥

तमेतमालयं भक्त्या यः प्रयातः सुहृत् सकृत् ।
समाधिस्थं गुरुं ब्रह्म वन्देतास्य पदे च यः ॥ ९४ ॥

यश्चैतस्य कृतीर्भक्त्या वर्णमात्रमपि स्फुटम् ।
गायेदेते गुरुप्रीत्या ब्रह्मसायुज्यमाप्नुयुः ॥ ९५ ॥

श्रीत्यागब्रह्मणोऽमुष्य पावनं चरितं मुदा ।
वक्ता श्रोता च पूतात्मा ब्रह्मभावे महीयते ॥ ९६ ॥

इत्थं मुक्तः स भक्तप्रवर उरुकृपो गायिलोकैकदीपः
त्यक्तक्षुद्रार्थकामो ह्यघहरणचणव्यक्तकीर्त्येकमूर्तिः ।
सक्तः श्रीरामनुत्यां सकलजनमनोरक्तशुद्धप्रभावः
श्रीमान् धीमान् सुरांशः सकरुणमवतात् त्यागराजः सदास्मान् ॥

इति 'गायकशिखामणि'–हरिकेशनल्लूर्–मुत्तय्य–
भागवतविरचिते श्रीमत्त्यागराजविजये
सप्तमः सर्गः.

ॐ तत्सत्

समाप्तश्चायं ग्रन्थः

श्रीरामार्पणमस्तु ।

Printed at the V. V. Press Branch, Trivandrum.

श्रीः

# पदार्थचन्द्रिका नाम लघुटिप्पणी ।

## ('न्यायशिरोमणि' के. ए. कृष्णशर्मकृता)

### अथ प्रथमः सर्गः ।

श्रीमतस्त्यागराजस्य विजयश्चरितं प्रतिपाद्यतया अस्यास्तीत्येतत् काव्यं त्यागराजविजयम् । अस्मिन् गायकशिखामणिकृते काव्येऽय विशेषोऽवगन्तव्य यत्—गायकलोकप्रसिद्धान् षड्जादीन् सप्त स्वराननुसृत्यात्रापि सप्तैव सर्गाः कृताः । प्रथमादिसर्गसप्तके च षड्जादिस्वरसप्तकस्य ज्ञापकान्यक्षराणि तत्पदानि वा प्रयुज्य श्लोकानारब्धवान् कविः । अतो हि प्रथमसर्गे प्रथमस्वरस्य षड्जस्य सङ्केताक्षरं सकारमादौ कृत्वा सर्वस्येत्यारब्धम् । एवमेवोत्तरत्र द्वितीयादिषु सर्गेषु क्रमेण ऋषभादिशब्दैरेव सर्गाः प्रारभ्यन्त इति ॥

१ उपनिषत्प्रतिपाद्यस्य ब्रह्मण जगत्सृष्ट्यादिहेतुत्वमिवास्य नादात्मकस्य ब्रह्मणोऽपि सन्तुष्ट्यादिनिरूपितस्रष्टृत्वादिकमव्याहतमित्याह सर्वस्येत्यादिना । पातृ—रक्षितृ । आधिर्मानसी व्यथा । व्याधिः शारीरिका बाधा ।

२. वर्णस्य अकारादेरक्षरसमुदायस्येत्यर्थ ।

३ मूलाधारस्थितं नादोत्पत्तेमुख्यस्थाने नाभिमण्डले स्थितमित्यर्थः । गजाननस्य गज इति व्यवहार औपचारिकः ।

४ वागीश्वरी सरस्वती ।

५ अज्ञानेत्यादिना कविः स्वकुलगुरून् श्रीमदाचार्यपूज्यचरणानभिवन्दते ।

६. आदिस्वरः षड्ज· सो वा स एव 'षण्मुखाय नम.' इत्यस्मिन् मूलमन्त्रे

बीजाक्षरं यस्य तं तथोक्तम् । अन्त्यस्वरो निषादः किरात इत्यर्थं तेन स्वश्वशुरभूतेन वल्लीजनकेन नितरां सेवितम् । गुह सुब्रह्मण्यमिति स्वोपास्यदेवतावन्दनमाचरित कविना । सङ्गीतशास्त्राभिमानिदेवतायाः षण्मुखस्य वन्दनमिति च युज्यते ।

७. त्यागराज इति नाम्नः सार्थकत्वं समर्थयते राम इत्यादिना ।

८. राममारुतिनारदानां प्रत्यक्षमित्रत्व कथायामुपरि निरूप्यते ।

९. अज्ञानरूपस्य तिमिरस्य रवये सूर्याय । पापरूपस्य पर्वतस्य पवये वज्रायुधाय । कवये कवनशीलाय । गानकला सङ्गीतविद्या विविधकृतिविरचनेन उद्धृता परिष्कृतेत्यर्थः ।

१०. तोयं पिबन्तो जनाः तत् तोयं दत्तवतो मेघस्य स्वरूपं यथा सर्वे न विमृशन्ति तद्वदिति दृष्टान्तः ।

११. चतुर चतु सङ्ख्याकानाश्रमान् ब्रह्मचर्यादीन् । चतुर कुशलः जागरूक इति यावत् । चतुरः पुरुषार्थान् धर्मादीन् ।

१२. निदर्शनं साक्षी । रसनाया रसे रसनीयपदार्थे लालसो लोलुपः सन्नित्यर्थं । त्यागराजचरितरसानुभवेनैव स्वरसनाया रसज्ञत्वं सुसम्पादमिति भावः ।

१३ ग्रन्थहारे ग्रन्थरूपायां मालायाम् । विवेकिनः गुणग्राहिणो दोषत्यजश्चेत्यर्थं ।

१४ सह्यजा सह्यगिरिसकाशादुत्पन्ना कावेरी नाम नदी । क्षीरं जलम् । तेन पावनः पवित्रीकृतः । अस्माच्छ्लोकात् षोडशश्लोकपर्यन्तमेकवाक्यता ।

१५. शरभोजिमहाराजः तञ्जापुरनगरस्य परिपालकस्तदा तं देशं शशास ।

१६ सोपानमिवाचरितानिसोपानायितानि गोपुराणि यस्मिन् देशे स तथोक्तः । दक्षिणापथ विन्ध्याद्रेर्दक्षिणे पार्श्वे ।

१७. उमा च स्कन्दश्चोमास्कन्दौ, ताभ्यां सहितः सोमास्कन्दः ।

१८ दीपकः प्रख्यापकः । विपश्चिदुत्तमः पण्डितश्रेष्ठः । वाक् च मनश्च वाङ्मनसम् । शुभ्रं वाङ्मानसं यस्य स तथोक्तः ।

२३. त्रैलिङ्गो ब्राह्मणः—प्रायेणामी ब्राह्मणा आन्ध्रभाषाभाषिणः । अवसदित्यन्तं पूर्वश्लोकानामेकवाक्यता ।

२४. ईशस्य शम्भोरावासयोग्यमीशावास्यं तादृशं मनो यस्य स तथोक्तः । एवैर्हेतुभिर्गिरिराजकविरिति नाम्नः सार्थत्वं संपादयति ।

२५ पृथुमानसः विशालहृदयः । न्यायवर्त्मगः त्रिध्युक्तनीतिमार्गगामी सदाचारसम्पन्न इति यावत् ।

वाग्गेयकारकः—वाचं गेयं च यः कर्ता स सङ्गीतसाहित्योभयनिपुणस्तथोच्यते । यथोक्तं सङ्गीतरत्नाकरे—

"वाङ् मातुरुच्यते, गेयं धातुरित्यभिधीयते ।
वाचं गेयं च कुरुते यः स वाग्गेयकारकः" ॥ (अ-३-श्लो. २)

२९. दिवा दिवसे । दोषा रात्रौ । प्रगे प्रातः । सायं अपराह्णे । अनिनीषत् नेतुमैच्छत् ।

३०. उद्दिधीर्षया उद्धर्तुमिच्छया । लोचनगोचरः अक्षिप्रत्यक्षः ।

३१. लोकयात्रा भूमौ जीवनम् ।

३२ अपितृऋणहारिणः पितॄणां ऋणं हरतीति पितृऋणहारी । स न भवतीत्यपितृऋणहारी तस्य । सन्ध्यभावो वैकल्पिकः ।

३४. द्विजशार्दूलः द्विजसिंहः ब्राह्मणश्रेष्ठ इति यावत् ।

३५. वधूरत्नस्य कन्यारत्नस्य जनकोऽस्मि पिताऽहमस्मि। भवान् यदि मज्जामाता मम जामाता भवति तर्हि मज्जा मदुत्पन्ना कन्या सुपुत्रस्य माता जननी भविष्यतीत्यन्वयः।

३६. उपयेमे पर्यणैषीत्। विधानत.—शास्त्रोक्तप्रकारेणेत्यर्थ ।

३७. शोभनायां शरदि ऋतावुपेत्य विष्णुपदाश्रय. नभ.स्थित. सन् कुवलयोल्लासं कुमुदविकासं कुर्वन्नातन्वन्। रेजे ललास। कोः भूमेर्वलयं मण्डलं तस्योल्लासं सन्तोष, विष्णुपदाश्रयो विष्णोश्चरणावलम्बः। इति चन्द्रेण सह श्लेष । अत्र 'ऋतावुपेयात्' इति नियमविधिरपि सूच्यते ।

३८. नाम्नापि शान्तां न केवलं स्वभावेनेत्यर्थः।

३९. जानकीजानि जानकीपतिम्।

४०. जातु कदाचित् । सप्तस्थानमहोत्सवो नाम कश्चनोत्सवोऽत्र प्रत्यब्दं प्रचलति यत्र सप्तक्षेत्रस्थितानां देवाना तेषु सप्तसु क्षेत्रेषु पर्यटनं विधीयते । नन्दिकेश्वरस्य विवाहमहोत्सवविजृम्भणे इममुत्सव उत्तराङ्गं वदन्ति तद्विद ।

४१. संजिघृक्षा संग्रहविषयेच्छा। समत्सरा परोत्कर्षासहिष्णुतायुता।

४२. अखर्वः दीर्घो यो गर्वोऽहङ्कारस्तेन स्वगतेन दुर्वारः इतरैर्वारणासहिष्णु । स्वेच्छाचार इति यावत्।

४९. भैक्षवे पक्षे भिक्षुसंबन्धिनि आश्रमे इत्यर्थः साम्प्रतं अधुना न साम्प्रतं न युज्यत इत्यर्थ ।

५५, अस्ति काचिदाख्यायिकाऽत्र कश्चिन्महीपतिः मनुनीतिदर्शी चोलराजः (மனுநீதிகண்ட சோழன்) स्वपुत्रं रथेन यानसमये निहतगोवत्सं

तस्या गोः प्रीत्यर्थं रथचक्रस्याधो निपात्य घातयामासेति । तादृशस्या-
पक्षपातिनो राज्ञः प्रत्यक्षकुलदैवतमिति भावः ।

५६. समयाचार्याः शैवसमयप्रचारार्थमवतीर्णाश्चत्वारः ते च-(१) श्रीज्ञान-
संबन्ध (२) श्रीवागीशः (३) श्रीसुन्दरमूर्ति (४) श्रीमाणिक्य-
वाचकः इति नामभिः प्रसिद्धा द्राविडभाषाकवयः ॥

५७ शिवं शम्भु निषेव्य सर्व शिव मङ्गल प्रापुरित्यर्थः ।

५९ सदारः सपत्नीक ।

६०. सर्वदा उमाधव इति, सर्वद माधवः इति च च्छेदे शम्भुर्विष्णुश्च
लभ्यते ।

६१. तद्दयाप्रभवं—तद्दयाहेतुकम् ।

६३ तिरोहिते चक्षुरप्रत्यक्षे जाते सतीत्यर्थः ।

६६ जात पुत्रमित्यर्थः ।

६७ उरुभवनाश महत संसारस्य प्रलयप्रापक भवं शङ्कर भेजे सिषेवे ।

## अथ द्वितीयः सर्गः ।

१. ऋषभो ध्वजे यस्य स तथोक्त शिवः तस्य कारुण्यात् कृपाबलात् ।
तनयर्षभः पुत्रश्रेष्ठः । गायकः गानशीलस्त्यागराजः ।

२ धर्म्यं धर्मादनपेतम् । यतात्मकौ नियमबद्धमनश्शरीरौ सन्तौ आचे-
रतु अन्वतिष्ठताम् ।

३ वलक्षपक्षे शुक्लपक्षे । पुष्यर्क्षे पुष्यनक्षत्रे ।

४. तान्ता परिश्रान्ता । भान्तं शोभमानं पुत्रमजीजनज्जनयामास । कलानिधिं पूर्णकलं चन्द्रं प्राची दिक् । कुवलयप्रियं कुमुदमोदकं भूमण्डलोल्लासकं च ।

५. मूर्तः शरीरभाक् । आर्तिवारक शोकनाशक । शिशुच्छलादिति कैतवापह्नुतिरियम् ।

६ जातमात्रस्य शिशोः स्वाभाविकस्य क्क क्केति रोदनस्य रामसाक्षात्काराभिलाषद्योतकतयोत्प्रेक्षणाद्धेतूत्प्रेक्षेयम् ।

७ अफलस्य शिशुमुष्टिबन्धद्वयस्य तथा फलोत्प्रक्षणात् फलोत्प्रेक्षेयम् ।

८. जातरूपहसद्रूपं स्वर्णपरिहासिसौन्दर्यं त त्यागराज इति नाम्ना आह्वयत् । तथा नामकरण चक्र इति भावः ।

९. रिङ्गणं जानुभ्या परिभ्रमणम् । अर्भकैः बालैः ।

१०. कल्याणीत्यादिशब्दा रागनामधेयानि । सारङ्गानां पशुपक्षिणामपि मोहन हृदयरञ्जनं चक्रे किंपुना रसिकानां मनुष्याणामिति भावः । श्रियां सम्पदि रागः आसक्तिस्तद्विजय तद्दूरीकरणं तेनाढ्यया युक्तया वैराग्यसम्पन्नयेति भाव ।

११. नायकी, भूपाल इत्यादयोऽपि शब्दा रागविशेषवाचकाः । धन्याः । असीमाः अपरिमिताः कला विद्या यस्य स तथोक्त । धन्यासीत्येतद्रागनामधेयम् ।

१२. वसन्तादयः शब्दाः रागविशेषवाचकाः । तत्र वसन्तरञ्जकत्वं मेघानां, मेघरञ्जकत्वं चन्द्रिकायाः, चन्द्रिकासम्बन्धित्वं रवेश्च दुर्घटमपि अत्रापि केषाञ्चिद्रागनाम्नां कथनार्थमेव विरोधाभासः ।

१३. सन्तौ कोविदौ पितरौ अनन्दयन्मोदयामास ।

१४. द्राविडी Tamil. आन्ध्री Telugu. गैर्वाणी Sanskrit बभौ प्राकाशत ।

१५ मन चक्रे निश्चिकायेत्यर्थः । पञ्चनदं Tiruvadi in Tanjore District. (7miles from Tanjore.)

१६ कथञ्चनेत्यनेन तस्य तत्पुरपरित्यागासहिष्णुत्वं गम्यते ।

१९ कावेरी नाम नदी । असङ्किपुङ्गवाः विरक्तवर्याः ।

२०. अस्मिन् क्षेत्रे विराजमानायाः पार्वत्या नाम धर्मसंवर्धनीति । पशुपतेश्च नाम प्रणतार्तिहर इति । तयो प्रियमिष्टम् ।
वागीशमुनि . वैभवमित्यत्रेयं कथा कथ्यते—शैवसमयाचार्येषु चतुर्षु द्वितीयस्य वागीशाख्यस्य भक्तस्य प्रार्थनानुरोधेन भगवान् पार्वतीजानि तं तत्रत्ये कस्मिंश्चित्पावने सरसि स्नापयित्वा अस्मिन्नेव क्षेत्रे स्वावासभूत कैलासगिरिं तस्मै सदर्शयानुजग्राहेति । अत एवेदं क्षेत्र दक्षिणकैलास इत्यपि कीर्त्यते इति प्राज्ञाः ।

२१ गैर्वाणी शाला—The Raja's College of Sanskrit and Tamil studies

२२ यौवत .परा.—युवजनवेदमवर्धनीति विद्याविकासिनीति च तत्रत्ययो परिषदोर्नामनी ।

२३ घनपाठि मुक्तामणिरित्यनेनात्र चिराय वेदान् द्विजसमूहान् निष्काममध्याप्य प्राप्तकीर्तेः मुत्तुघनपाठिनाम्न कस्यचित् श्रोत्रियपुङ्गवस्य भान सूच्यते ।

२५–२४ विद्यारत्नं शास्त्ररत्नाकरः, न्यायविशारदः गायकरत्न इतीमानि पदानि तत्रत्यानां विद्वत्प्रमुखानां विरुदवाचकानि ।

२७. जगामेत्यन्त पूर्वेषां नवानां श्लोकानामेकवाक्यता । सह्यसुताऽमृते कावेर्यास्तोये ।

२८. कवेरतनया कावेरी । कवेः अतनुचेतस विशालमानसस्य कवेः ।

३३. व्यानशे व्यापयामास ।

३५ उञ्छवृत्तिः केदारादन्यगृहाद् वा कणशो लब्धस्य दत्तस्य वोपादानम् । भिक्षाटनमिति यावत् ।

३६. अकिञ्चनाय दरिद्राय । शुभ्राय निर्मलान्त.करणाय ।

३७. श्रीमज्जनाख्यवार्थी திருமஞ்ஜன வீதி

४७. श्रितकल्पद्रून् आश्रितानां कल्पवृक्षसमान् ।

५१. वैणिकं वीणावादननिपुणम् ।

५४. भाषाङ्गानि क्रियाङ्गानि रागाङ्गानि चेति रागजातीनां विभागो लक्षण-ग्रन्थादवगन्तव्यः । रक्तिमा सङ्गीते स्वानुभूतिरन्यादृशी या हि लक्षण-ग्रन्थेषूच्यते ।

५५. गीतं, अलङ्कार, कीर्तन, पदं, वर्णः इत्यादयः सङ्गीतप्रबन्धविशेषा-स्तच्छास्त्रोक्ता ज्ञेयाः । व्यम्राक्षीत् विमर्शनमकार्षीत् ।

५९. शारीरश्रीः सुश्राव्यकण्ठनादसम्पत् ।

६०. नारद इति मत्वा तथा बुधानां प्रश्नो व्यज्यते ।

महतीति नारदस्य वीणोच्यते ।

६२. आगमः आगच्छ । लङि मध्यमपुरुषैकवचने रूपम् ।

६३, सुरासक्तिं सुरायां मद्ये आसक्तिमित्यपि । वस्तु वास कर्तुम् ।

६४. किमुद्यमः तवेति शेषः ।

६५. अतिविद्याधरः—विद्याधरानतिक्रान्त । मितम्पचमतीनल्पबुद्धीन् ।

६६. मुधा व्यर्थम् । एवन्नाम्ना तेषां नाम्नां गतार्थता सपादितेति भाव ।

७३. रिक्तत्वं दारिद्र्यम् । अन्वये कुले ।

७४ रामसन्निधेः राघवसन्निधानादन्यं निधिं कोशं द्रव्यमित्यर्थ ।

७५ मन्दाक्रान्ते–मूढजनपरिव्याप्ते । यदधिगमनात् यस्य सत्पथस्याश्रयणात् ब्रह्मसब्रह्मचया ब्रह्मण्यैक्यं ब्रह्मवद्भावो वा मुक्तिरिति यावत । विरेजे अशोभत ।

## अथ तृतीयः सर्गः

१. गां वाच उपदेशमित्यर्थः । तान त्यागराजस्य पिता रामब्रह्म। । रावणं–रावण इव स्थितस्य तत्तादात्म्यमौपचारिकम् । विभीषणेऽप्येवम् । कालमेघ ददर्शेत्यादि दर्शनात् तादात्म्येनापि प्रयोगः साधुः ।

१३. दुर्लभस्य भावो दौर्लभ्यं, अज्ञातं द्रव्यस्य दौर्लभ्य रक्षण च येन स तथोक्तः ।

१४ श्रेष्ठिभिः नागरिकैर्धनिकैर्वणिग्भि. । मदन्यः को जगत्पतिः भवेदिति शेष ।

१६. सार्थनाम्ना त्यागराज इत्यन्वर्थनामधेयभाजा ।

१९. दाक्षिण्यात् परच्छन्दानुवर्तनात् ।

२० स्विन्नफालः परिश्रमाधिक्येन सञ्जातस्वेदाम्बुधाराद्रललाटः । अतिमात्रश्रममनुभूयेति भाव ।

२२ विषमाध्वना–पित्रोरिच्छा त्विनैव, स्वभागेऽधिक अनुजभागे न्यून च यथा स्यात् तथाऽन्याय्यमार्गेणेति भाव. ।

२४ अर्हमत्वादित्यादयो हेतवो जप्येशस्य रामपरित्यागे प्रयोजकाः । अनारतावगमनादेव परितत्याज ।सारता यद्यज्ञास्यत् तर्हि तामपि हरिप्रतिमां नात्यक्ष्यदिति हृदयम् । तस्य पापित्वाच्च तत्प्राप्तौ तस्य सुकृतं नासीदिति तत्त्वम् ।

२६. अविग्रह विवादो यथा न स्यात् तथा ।

३० षोडशोपचाराः स्मृत्युक्ता वेदितव्याः ।

३२ पितृतः शिष्टं पित्रोर्भोजनानन्तरमवशिष्टमित्यर्थः ।

३४. पुष्यमण्टपं नाम किमपि सुन्दरं मन्दिरं कावेरीतटे निर्मितं वर्तते यत्र पुण्यकालेषु प्रणतार्तिहरस्य हरस्य सपरिवारस्य समागमस्तीर्थप्रसाददानं च विजृम्भते ।

३५. प्रदोषे रजनीमुखे । तदा शिवदर्शनं विशिष्यत इति शैवागम ।

३६ दक्ष (ब्रह्मतत्त्वप्रवचन) निपुण. । दक्षिणकैलास इति कस्यचिद्देवालयस्य नाम यमेव पुरा वागीशमुनि कैलासगिरितया शिवानुग्रहेण ददर्शेत्यैतिह्यं श्रूयते ।

३८. इन्द्रियग्रामे चक्षुरादिकरणसमूहे विश्रान्ते निर्व्यापारे जाते सति । परं ब्रह्म हृदाऽगमत् परब्रह्मण साक्षात्कार योगबलेन चित्ते कुर्वन्नासीदित्याशय ।

३९. पद्मपत्र यथाऽम्भसि न मज्जेत् तथाऽयमपि ससारे न मज्जेदिति हृदयम् । अम्भसि पद्मपत्रमिवासक्त: सन् स्थितोऽय कथ मज्जेदिति वदतां मते स्थित इत्येक पदमध्याहार्यम् ।

४१ पीयूषसिन्धुम्-अमृतप्रद क्षीरार्णवमित्यर्थ. । क्षुण्णे वर्त्मनि अभ्यस्ते मार्गे । विजिग्ये उत्कर्षेणावर्ततेत्यर्थ ॥

## अथ चतुर्थः सर्गः ।

१ मध्यमे स्वर्गपातालयोरन्तरालस्थिते । महाधर्मकृतिक्षमे महतां श्रुत्युक्तानां अत्युच्चफलप्रापकाणा धर्माणां यागादीनामनुष्ठानानुकूले । अन्ययो. स्वर्गनरकयोरत्रकृतानां सुकृतदुष्कृतानां फलरूपत्वात् क्षिताविव तत्साधनानुष्ठानं सुशकमिति भावः ।

२. असौ पुत्रः ।

४. पितुरिति षष्ठी पित्रेत्यर्थे ।

५, राघवाद्यौपम्ये वक्तव्ये तत्तादात्म्यकथनमत्यर्थसादृश्यनिबन्धकम् ।

८. अक्षरसेविनं नित्यपरमात्माभिवन्दिनं सद्विद्यासक्तं वा ।

९. ब्रह्मभूयं ब्रह्मवद्भावं ।

१०. शान्ता रामब्रह्मणः पत्नी भवबन्धनात् शान्ता विरता विमुक्तेति यावत् ।

११. एतेन तयो पित्रोर्दैवतांशत्व सज्जनोद्धारार्थमवतीर्णत्वं च ज्ञाप्यते ।

१२. अब्दान् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ।

१३. सत्या साध्व्या पत्न्या ।

१७ विधीयतामाज्ञाप्यतां त्वयेति शेष ।

१९. प्रार्थित त्यागराजमित्यर्थः ।

२२ भवतारक संसारसागरात् पार गमयितृ तारक तारकमन्त्रः । रामरामेति मन्त्रस्य तारकमिति योगरूढिः ।

२४. आयन्त्रितेन्द्रियः सम्यक्वशीकृतचक्षुरादिकरणजालः । अतन्द्रितः आलस्यरहितः ।

२५ तन्मयता ब्रह्मभावः ।

२८. श्रुत्युक्तधर्मदक्षाय वेदोक्तधर्मानुष्ठाननिपुणाय श्रुत्युक्त्या श्रवस्युच्चारणेन

२९ अर्चनीयाङ्घ्रि पूजनीयचरणम् ।

३०. मनु मन्त्रम् । मनुजादर्श. मानवानां धर्माचरणे आदर्शभूतः मार्गदर्शीति यावत् । पञ्चभिः समाभिर्वर्षैं समां सम्पूर्णां संख्यां षण्णवतिं कोटीः समापयत् जप्त्वा पर्यपूरयत् ।

३४. आशु सा ददर्श यद्दर्श तदुत्तरश्लोकेषु वक्ष्यते ।

३६. अहीशकर सर्पराजायमानहस्त । सतामभयप्रद' ।

३७. निरालेपः पुण्यपापाभ्यां विकृतिशून्यः । दम्पतिभ्यां त्यागराजतत्प्रियाभ्याम् । दृशा चक्षुषा पपे पान चक्रे सम्यगदर्शीत्यर्थः ।

४९ आनन्दतुन्दिलमानस आनन्दपूर्णहृदयोऽभूदिति शेष । ईशितु राघवस्य रामणीयक सौन्दर्यम् । अमित निपीतस्य क्षीरोदधेः कथञ्चिद् बहिर्वमनं हि नैसर्गिकमिति भाव ।

४६. मेळ इति सङ्गीतकृतिरचने किञ्चिदङ्गं सङ्गीतशास्त्रे विव्रियते, यदनुसारेण रागभेदो निर्णीयते ।

४७. सङ्गीते गानपरिपाट्याः द्वैविध्यं दृश्यते देशी, कर्णाटश्चेति ।

४८. पण्डितैरपि गानकुशलैरपि दुर्गमा दुर्ज्ञानमर्मणः ।

५०. विनयोत्तसैर्विनयाभरणै ।

५२ शिष्टाः सदाचारसम्पन्ना वैदिका' ।

५३. कश्चिदनिर्वचनीयमहिमानं तममुं प्रसिद्धमिमम् ।

५४. द्वाविंशो वयस्येव । प्रज्ञया तु प्रथम इति भावः । तपस्वी कृशाङ्ग अभिमान्य. रसिकजनाभिमानार्हं । ववृधे प्रावर्धत ।

## अथ पञ्चमः सर्गः

१. पञ्चयन् स्वकृतिभिर्विवृण्वन् ।

५. वन्दारवो वन्दनीया' । आनर्च समार्चन् ।

८ नीलाम्बरीगानैः नीलाम्बरीनाम्ना रागविशेषेण गानै । स्नापनेऽयं रागो विनियुज्यते ।

१२ ते तदभ्यसूयवो मूर्खा. ।

१७ रीणतैलेन प्रस्यन्नतैलेन ।

१९ कर्मन्दी सन्यासी । इन्दिरावरो रमापतिः ।

२२ भवत संसारात् तारकस्य भवतस्ते ।

३१. कृतकृत्यकं विद्वांसम् ।

३३. रामप्रीतिकृते रामप्रीतिमुद्दिश्य कृते विरचिते ।

४५ आश्रवः प्रतिज्ञा ।

४६. तारकोत्सुकस्य तारकमन्त्रजपपरकौतुकस्य सन्तुष्ट्यै प्रमोदाय । तारकेशो नक्षत्रेशश्चन्द्रमाः ।

५१. स्वरवाप्तिः स्वर्गप्राप्तिः अदुश्शका सुकरेत्यर्थ.।

५२. ब्रह्मपुत्रे नारदे ।

४५ त गायकलोकप्रसिद्धं स्वरार्णव षड्जादिस्वरगणिम् ।

५७ समे सर्वे ।

६३ अपुण्यानामकृतसुकृताना दुर्गमं दुर्लभम् ।

६४ उपोषित कृतोपवास. । हरिवासरे एकादश्या तिथौ ।

६५ वृन्दावनद्वादशीति काचिद् द्वादशी तिथिर्स्वलिङ्गब्राह्मगर्भाश्वश्च विशेषेणानुष्ठीयते यत्र वृन्दावनाख्योऽवर्पीठाभिवर्तिताया भगवत्याः तुलस्याः पूजावन्दनादिकं विधीयते ।

६६ पञ्चापगेशदेव पञ्चनदेश्वर ।

६६ कलामदनात्मक कलाना सङ्गीतसाहित्यादीनामालयात्मानमानसः ।

## अथ षष्ठः सर्गः ।

३. सत्पथे सन्मार्गे, नक्षत्रवर्त्मनि नभसि च ।

८ अय राजपुरुषो विप्रः । अस्पृह त्यागराज इत्यर्थ. ।

१७. शूलां वेदनाम् ।

३५ तमिस्रायां तमोव्याप्ताया रात्र्याम् ।

४३ स मूर्खो जप्येश ।

४४ दुस्वप्नमग्नात्मा रामस्य तस्करेण हरण स्वप्ने दृष्ट्वा तेन । खिन्नमानसस्त्यागराज ।

५० स' त्यागराजः ।

५३. हरिमानसाख्ये मानससरोवरे इत्यर्थः कावेरीपूरस्य सर्वस्य हरिमानसप्रवेशात् कावेरीपात्र सिकताप्रचुरमल्पजातं जातमिति भाव ।

६२. वञ्चिमहीपाल वञ्चिभूमिनाम्न केरळदेशस्य पालकः चेरराज इति प्रसिद्धः ।

७०. सेवा हरिभक्तिरेव मृगमद कस्तूरी तस्यामोद परिमलः तद्वतीया कला सङ्गीतविद्या सैव तिलक विशेषकं तेन लासिनीः प्रकाशमानाः । स्वरसाहित्यमिति कश्चननिबन्धविशेषो यत्र सरिगमादीनां स्वराणामेवार्थवत्तया सङ्ग्रथनम् ।

## अथ सप्तमः सर्गः ।

१. भोगे फणिपतिशरीरे निषादरसिकं शयनसुखिनम् । बुभूषालञ्चक्रे ।

१२. सुमनोहारिसौन्दर्यं अत्यर्थं हृदयाकर्षकरामणीयकम्, सुमनसां पुष्पाणां हारी हारवान् विग्रहो मूर्तिर्यस्य तं तथोक्तम् ।

१८ करुणरस. शोकरसः ।

२१. वितरन् ददत् भव ससारसागरमतरत् पारंगत इत्यर्थः ।

३९. नवसालख्यं पुर 'पुदुक्कोट्टै' इति द्राविडभाषयोच्यमानम् ।

४४. अतिनारदं नारदमतिक्रान्तम् ।

५१. तद्विनाश्य तदपरं अवशिष्यमाणं जन्म कथञ्चिद्यापयित्वा ।

६३. कृते कृतयुगे । एवमुत्तरत्रापि ।

७९. गाङ्गपाथोभि. भागीरथीतीर्थैः ।

८७. नगर समया पत्तन परितः । सुरांशः देवतांशसम्भूतः । "यद्यद्विभूतिमत् सर्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्व मम तेजोंऽशसम्भव"मिति भगवदुक्तिप्रामाण्यात् तस्य देवतांशत्वं दुरपह्नवमिति भावः ।

इति लघुटिप्पणं समाप्तम्

श्रीत्यागराजार्पणमस्तु ।